॥ श्रीः ॥

इदं किल,

# श्रीमद्बोधेन्द्रयतीन्द्रविरचितं
# नामामृतरसायनम्



तञ्जानगरप्रतिष्ठितायां

"श्रीपुर्णचन्द्रोदयमुद्राक्षरशालायाम्"
मुद्रयित्वा प्रकाशितं

विजयतेतराम् ।

१९२६.



## ॥ श्रीचन्द्रमौलीश्वर ॥

---

स्वस्ति श्रीमदखिलभूमण्डलालंकारत्रयस्त्रिंशत्कोटिदेवतासेवितश्री-कामाक्षीदेवीसनाथश्रीमदेकाम्रनाथश्रीमहादेवीसनाथश्रीहस्तिगिरिनाथसा-क्षात्कारपरमाधिष्ठानसत्यव्रतनामाङ्कितकाञ्चीदिव्यक्षेत्रे शारदामठसुस्थिता-नाम् अतुलितसुधारसमाधुर्यकमलासनकामिनीधम्मिल्लसंफुल्लमल्लिकामालिका-निष्यन्दमकरन्दझरीसौवस्तिकवाङ्निगुम्फविजृम्भणानन्दतुन्दिलितमनीषिमण्ड-लानाम् अनवरताद्वैतविद्याविनोदरसिकानां निरन्तरालंकृतीकृतशान्तिदान्ति-भूम्नां सकलभुवनचक्रप्रतिष्ठापकश्रीचक्रप्रतिष्ठाविख्यातयशोलंकृतानां निखिल-पाषण्डषण्डकण्टकोत्पाटनेन विशदीकृतवेदवेदान्तमार्गषण्मतप्रतिष्ठापकाचा-र्याणां श्रीमत्परमहंसपरिव्राजकाचार्यवर्यश्रीजगद्गुरुश्रीमच्छंकरभगवत्पादा-चार्याणामधिष्ठाने सिंहासनाभिषिक्तश्रीमन्महादेवेन्द्रसरस्वतीसंयमीन्द्राणा-मन्तेवासिवर्य**श्रीमच्चन्द्रशेखरेन्द्रसरस्वतीश्रीपादैः** अस्मदत्यन्त-प्रियशिष्यतञ्जापुराभिजनदेवशंकरठाकुरविषये सर्वाभीष्टसिद्ध्यै क्रियते नारा-यणस्मृतिः । वयमिह विरिञ्चिलैग्रामे त्रिकालसमभ्यर्च्यमानश्री ( चन्द्र-मौलीश्वर) स्वामिचरणारविन्दा अद्वैतानन्दतुन्दिलान्तःकरणाश्च सुखमास्महे ।

संप्रति श्रीभगवन्नामबोधेन्द्रसंयमीन्द्रविरचितं नामामृतरसायनं नाम ग्रन्थरत्नं पण्डितप्रवराणां साहाय्येन संशोध्य मुद्राप्यास्मत्संनिधौ भवतोप-हारीकृतं विलोक्य साधु महदुपकृतं लोकस्येति मोमुद्यामहे । एवं सत्कार्यो-द्यताः प्रवर्तकाः प्रोत्साहकाश्च भवन्तः श्रीचन्द्रमौलीश्वरकृपया श्रेयःपर-म्परामवाप्नुयुरित्याशास्महे ।

मुकाम्- विरिञ्चिलै ।<br>क्रोधनसं० मार्गशिर शुद्ध ६<br>स्थिरवासरे.

**नारायणस्मृतिः ।**

॥ श्रीः ॥

# भूमिका ।

कदाचित्किल कालवशाच्छ्रौतादिकर्मणाममितद्रव्यसाध्यतया नियमाध्ययनपरिगृहीतमन्त्रतदर्थविज्ञानश्रद्धाधनैकपुरुषाधिकारिकतया च यथावदनुष्ठातुमशक्यत्वेन तत्रोत्साहविधुरान्स्वेष्टसाधकसाधनापरिज्ञानेन क्लिष्टान्दीनानालोक्य करुणातरङ्गितान्तरङ्गाःश्रीभगवद्बोधेन्द्रसंयमीन्द्रास्तदनुजिघृक्षया " ध्यायन्कृते यजन्यज्ञैस्त्रेतायां द्वापरेऽर्चयन् । यदाप्नोति तदाप्नोति कलौ संकीर्त्य केशवम् ॥ " इति वचनान्नामकीर्तनमेवेदानीं सकलपुरुषार्थसाधनसमर्थमिति निश्चित्याहर्निशमेकान्ततः श्रीरामपादपद्मचञ्चरीकायमाणान्तःकरणास्तन्नामभजनलब्धसिद्धयः प्राचीनपुण्यवैभवेन स्वसंनिधिमागतेषु साधुजनेषु नाममाहात्म्यं प्रकटीकृत्य तैः संप्रार्थिता नामवैभवप्रतिपादकानि बहूनि ग्रन्थरत्नानि व्यरचयन् । तेष्वन्यतमः किलायं नामामृतरसायनाभिधो ग्रन्थमणिः । अस्मिन्हि श्रौतादिकर्मणामनेककारकसापेक्षत्वेन देशकालनियमाद्यपेक्षतया च सहसैवानुष्ठातुमसुलभतया भगवन्नामकीर्तनस्य तावदपेक्षाराहित्येन सुखसंपाद्यतया च तस्मादेव निखिलपुरुषार्थसिद्धिर्भवतीति सुनिपुणमुपपादितम् । अत्र च प्रमाणतया श्रुतिस्मृतीतिहासपुराणाभियुक्तोक्तयः प्रदर्शिताः। तत्रापि श्रीभगवत्पादविरचितश्रीविष्णुसहस्रनामभाष्यमेवादृतं बहुशः । श्रीभगवत्पादाचार्यैर्हि सहस्रनामभाष्यव्याजेन नाममाहात्म्यमेव प्राधान्येन प्रकटितम् । यथा शारीरकभाष्यस्य प्राधान्येन शारीराभिन्नब्रह्मविषयकत्वेऽपि शारीरकभाष्यत्वप्रसिद्धिस्तथा प्राधान्येन नामवैभवप्रतिपादकस्यापि सहस्रनामभाष्यस्य सहस्र-

नामभाष्यत्वप्रसिद्धिः । तत्र च श्रौतस्मार्तादिबहुविधधर्माणां मध्ये नामकीर्तनस्यैवोत्तमधर्मत्वं सुखसंपाद्यत्वमनन्तफलप्रदत्वं च विवृतं बहुधा । "श्रुत्वा धर्मानशेषेण पावनानि च सर्वशः । युधिष्ठिरः शांतनवं पुनरेवाभ्यभाषत " इति श्लोके धर्मान् = अभ्युदयनिःश्रेयसहेतुभूतान्वेदलक्षणान्, अशेषेण = कात्स्न्येन, पावनानि = पापक्षयकराणि च, सर्वशः = सर्वप्रकारैः श्रुत्वा सकलपुरुषार्थसाधनभूतं सुखसंपादनमनुक्तमिति मत्वा पुनरेवाभ्यभाषत । " इति भाष्यवचनपर्यालोचनया बहुलायाससाधितमपि वैदिकं कर्मजातं प्रामादिकापराधलेशतो विगुणं सन्न केवलं फलाय न भवति प्रत्युत विपरीतं सदनर्थायापि भवतीति साधनान्तरापेक्षया नामकीर्तनस्य प्राशस्त्यं प्रतीयते । इतरसाधनापेक्षया नामकीर्तनस्याभ्यर्हितत्वसिद्धावपि वैदिकधर्मजातापेक्षया कथमस्य प्राशस्त्यलाभ इति चेदुच्यते—लोके हि निर्धारणषष्ठयन्तप्रयोगस्थले 'अयं ब्राह्मणानां मध्ये श्रेष्ठः' इत्यादौ श्रेष्ठस्यापि निर्धारणषष्ठ्यन्तार्थसजातीयं ब्राह्मणत्वादिकमेव सिध्यति यथा, तथा पूर्वोक्तश्रौतस्मार्तादिधर्माणां मध्ये कः परम इति प्रश्नस्य " एष मे सर्वधर्माणां धर्मोऽधिकतमो मतः । यद्भक्त्या पुण्डरीकाक्षं स्तवैरर्चेन्नरः सदा ॥ " इति प्रतिवचनस्य च परामर्शे, इतरवैदिकधर्माद्यपेक्षयास्य नामकीर्तनस्य प्राशस्त्यं सिद्धमेव भवति । एवम् " नो देशकालनियमः शौचाशौचविनिर्णयः । परं संकीर्तनादेव राम रामेति मुच्यते ॥ " इत्यादिवचनैर्नियमाद्यनपेक्षता " हरिसंकीर्तनस्यास्य नोपदेशः कथंचन " इत्यादिना गुरूपदेशानपेक्षता च सौलभ्याय प्रपञ्चिता । इत्थं च नामकीर्तनस्य पुराणेतिहासादिषु कमपि नियममनपेक्ष्य सकलपापक्षयहेतुत्वस्य सकलाभ्युदयनिःश्रेयसहेतुत्वस्य चाभिधायकवचनानां स्वार्थपरत्वं प्रदर्श्य, इममेवार्थं पुनः पुनरभिधानेन दृढीकर्तुमग्रिमसंदर्भेषु पञ्चषेषु स्थलेषु भाष्ये नाममाहात्म्यप्रतिपादकवचनानि बहूनि दर्शितानि । एवं प्रख्यातवैभवस्य भगवन्नाम्नः सकृदुच्चारणेनापि पुरुषधौरेयस्य सर्वप्रतिबन्धकरहितस्य भवति कृत-

कृत्यता । यस्य तु प्रतिबन्धकवशान्न द्रागिव सा सिध्यति तस्य नामकीर्तनावृत्त्या भवत्येव कृतकृत्यता । सकृदुच्चारणादेव सकलमपि दुरितं विनश्यतीति न पापवर्त्मनि स्वेच्छाप्रवृत्तिः शङ्कनीया यतः सन्निन्देत्यादिनामापराधदशके निषिद्धाचरणमप्यन्तर्भावितम् । तादृशापराधयुक्तानां नामैव तन्निबर्हणम्, "नामापराधयुक्तानां नामान्येव हरन्त्यघम् । अविश्रान्तप्रयुक्तानि तान्येवार्थकराणि च ॥" इति पाद्मोक्तेः । एवं पापकर्मतो निवृत्तिम्, सद्धर्मप्रवृत्तिम्, नाम्नि प्रेम, नामसांतत्ये मोदाविर्भावम्, तत्र च बुद्धेर्लयम्, बाह्यविषयास्फुरणम्, तदेकात्मतां च प्रसाध्य नामैव मुक्तिमपि साधयतीत्यतिसरलपदनिखिलजनलालनीयं नामामृतरसायनं श्रीमद्बोधेन्द्रयतीन्द्राः संजगृहुरित्येदंयुगीनानामसाधारणी कापि भाग्यधोरणी पचेलिमापि न तथोपकाराय भवति यथास्य मुद्रापणेन विनिवार्य ग्रन्थदौर्लभ्यं संपाद्येत सर्वत्र तत्सुलभतेति विचिन्त्य बह्वीस्तालपत्रलिखिता मातृकाः संपाद्य शोधयित्वा च पण्डितैः श्रीसुब्रह्मशास्त्रिभिर्मुद्रापितवानस्मि । तमिमं मदीयं चिरपरिश्रमं सफलयन्तु साधव इति संप्रार्थये ।

इति श्रीकामकोटिपीठाधिपतिजगद्गुरु-

श्रीशंकराचार्यभगवत्पादानामन्तेवासी

देवशंकरशर्मा ।

।

# शुद्धिपत्रम् ।

| पृष्ठ | पङ्क्ति | | पृष्ठ | पङ्क्ति. | |
|---|---|---|---|---|---|
| ३ | १७ | कांश्चित्तु | ४९ | १७ | दैवीं |
| ५ | ६ | मनन | ५१ | ४ | रनुष्ठेयं |
| ,, | १९ | निःश्रेयसो | ५२ | ४ | पदार्थे |
| ६ | १५ | नैरन्तर्यें | ,, | २१ | मणव |
| ७ | १ | सुखसंपाद्य | ५५ | ६ | अल्पाया |
| ,, | ९ | प्रायश्चित्तानां | ६४ | ७ | क चाहं |
| ३२ | १४ | उन्मूलय | ६५ | ३ | मानर्थ |
| ,, | १५ | वचना | ६६ | २० | माहात्म्ये |
| ३३ | २२ | चण्डाल | ६८ | ८ | मङ्गीकार्यं |
| ३५ | २ | शंसनस्य | ६९ | १३ | लघुगुरु |
| ,, | २५ | नाम्नि | ७२ | ३ | केभ्यश्चिद्व |
| ३६ | ५ | बहुक | ,, | १७ | सर्वाश्रमाण |
| ४० | १ | नैत्र | | | |



॥ श्रीः ॥

# ॥ नामामृतरसायनम् ॥



सकृत्प्रपन्नजनतासंरक्षणदीक्षिताय श्रीरामब्रह्मणे नमः

सदा सर्वेष्टदं जन्तोः सर्वारिष्टनिवारकम् ।
श्रीरामनाम जयतु श्रेयोहेतुशिखामणिः ॥ १ ॥

सदानन्दः श्रीमाननुपधिककारुण्यविवशो
जगत्क्षेमाय श्रीहरिगिरिशरूपं विधृतवान् ।
अपर्याप्तं रूपं जगदवन एतत्पुनरिति
प्रभुर्जागर्ति श्रीहरिगिरिशनामात्मकतया ॥ २ ॥

सकलभुवनरक्षापेक्षया यः परात्मा
निरवधिदयया श्रीशेशनामात्मकः सन् ।
प्रविलसति सदासौ सोऽनुकम्पासुधाब्धि-
र्मम भवतु तदात्मा सुस्थिरो वक्त्रपद्मे ॥ ३ ॥

सर्वस्य लोकस्य सदा सुगुप्त्यै
नामात्मको भाति हरीशयोर्यः ।
दयासुधाब्धिः स तदात्मको मे
रामः सदा वक्त्रसरोरुहेऽस्तु ॥ ४ ॥

यन्नामकीर्तनादेव दग्धदुर्जातिकिल्बिषः ।
किरातोऽभून्मुनिश्रेष्ठो वाल्मीकिरिति विश्रुतः ॥ ५ ॥

विद्याधराख्यविमोऽपि यन्नाम्नः कीर्तनाद्गात् ।
मुक्तिं तद्रामनाम्न्येव मम वागस्तु सर्वदा ॥ ६ ॥

सकलभुवनकर्ता सच्चिदानन्दरूपो
गिरिशमुखसुरेन्द्रैर्गीतकीर्तिः परात्मा ।
सकृदुपगतरक्षादीक्षितः श्रीनिवासो
मम हृदि निवसन्मां पातु सीतासमेतः ॥ ७ ॥

निर्माता स्थितिकारकोऽस्य जगतः सर्वेश्वरः सर्वगः
सच्चिद्रूपसुखात्मको विजयते स्वात्माखिलानां च यः ।
साक्षी वेदगिरेड्यपादकमलस्त्राता प्रपन्नः सकृ-
देनोऽसौ कृपयास्तु रक्षणपरो रामो मुदा मे सदा ॥ ८ ॥

सकृत्प्रपन्नस्य जनस्य रक्षा कृपाम्बुधेर्यस्य महद्व्रतं सः ।
रामः सदाप्यद्रमणीयकीर्तिः सीतापतिर्मां शरणं प्रपन्नम् ॥ ९ ॥

सृष्ट्यादिहेतुरखिलस्य चराचरस्य
दृष्ट्या निरस्तमदनोखिलगर्वराशिः ।
पाताखिलस्य जगतः परमो नियन्ता
साम्बः सदा स्फुरतु मे हृदि रामरूपः ॥ १० ॥

चेतनानां हि सर्वेषां यः सदा शंकरः श्रुतः ।
स शिवः शंकरो भूयात्सदा मम दयाम्बुधिः ॥ ११ ॥

सकलनतजनानां रक्षणे बद्धदीक्षो
वरवटतरुमूले संनिविष्टोऽखिलात्मा ।
सकलमुनिजनानां ज्ञानदाता दयाब्धिः
प्रदिशतु सुमतिं मे दक्षिणामूर्तिदेवः ॥ १२ ॥

विज्ञानवैराग्यपरात्मभक्तिशमादिभिर्योऽधिकृतां प्रपन्नः ।
विश्वाधिकाख्यामगमच्च तेन गुरूत्तमं तं प्रणमामि मूर्ध्ना ॥ १३ ॥

नत्वा गणेशं निखिलांस्तु विघ्नाञ्जित्वामरास्तोपमियुस्तमेव ।
तत्त्वाववोधाय नमामि मूर्ध्ना नित्यं निहन्तुं निखिलांस्तु विघ्नान् ॥

या वेदशास्त्रात्मकवन्द्यदेहा सर्वैः सुरेन्द्रैर्मुनिभिश्च पूज्या ।
श्रीभारती सा दयया मदीये जिह्वाङ्गणे नृत्यतु सर्वदैव ॥ १५ ॥

शास्त्रार्थं सुविनिर्णेतुमिष्टदं सर्वदेहिनाम् ।
यतिरूपधरं नौमि शंकरं लोकशंकरम् ॥ १६ ॥

श्रीरामस्य कृपादृष्ट्या तन्नामस्मृतिलब्धया ।
रच्यते श्रीभगवतो नामामृतरसायनम् ॥ १७ ॥

इह खलु सकलजगदुदयहेतुत्वाद्यनन्तकल्याणगुणाकरो महेश्वरः सर्वानन्दकरस्वरूपत्वेन शंकर इति सकलनिगमादिषु लोकेषु च सुप्रसिद्धो निरुपमकरुणापारावारो भगवाञ्छिवः सकललोकानामिष्टानिष्टसाधनविषयकप्रज्ञानप्रदानेन तान्सुखयितुं शंकरनामकपरमहंसमहामुनिरूपोऽभवत् । तद्रूपाश्च ते भगवत्पादाः स्वस्य केषांचिद्द्वैतवादिनामाचार्यमन्यानामिव यानीष्टसाधनानि शास्त्रेषु सुप्रसिद्धानि तान्यनिष्टसाधनानीति यानि चानिष्टसाधनानि तानीष्टसाधनानीत्युपदिश्य कांश्चित् प्रति न दुःखयितृत्वम्, किंतु सकलप्राणिनां यानीष्टसाधनानि यानि चानिष्टसाधनानि शास्त्रेषु सुप्रसिद्धानि तानि सर्वाणि यथाशास्त्रमुपदिश्य सुखयितृत्वमेव, तच्च सुखयितृत्वं स्थावरजङ्गमात्मकसकलप्राणिनां यानि सकलेष्टानिष्टसाधनानि तत्प्रदर्शनेन न तु केषांचित्प्राणिनामितीममर्थं शंकरभगवत्पादाचार्या इति स्वनाम्ना ख्यापयन्तः सन्तः, स्थावरजङ्गमात्मकसकलप्राणिनां धर्मार्थकाममोक्षाख्यसकलपुरुषार्थप्रदं विष्णुशिवयोर्नाम्नां मध्येऽन्यतमनामैव, तच्च स्मृतं वा

कीर्तितं वा श्रुतं वा सर्वेषामिष्टदं भवत्येवेति निश्चित्य तन्नाममाहात्म्यं वक्तुं सहस्रनामभाष्यमारब्धवन्तः, सहस्रनामस्तोत्रपीठिकायां प्रश्नोत्तररूपेण भगवन्नामकीर्तनस्य सकलधर्मापेक्षयोत्कृष्टत्वाभिधाने तथा सहस्रनामस्तोत्रान्तर्गतानां केषांचिन्नाम्नां नाममाहात्म्यद्योतकत्वे तथा केषांचिन्नाम्नां व्याख्यानावसरे तेषां नाममाहात्म्याभिधानसंगतिहेतुत्वे तथाद्यावन्ते मध्ये मध्ये च बहुधा नामकीर्तनमाहात्म्याभिधायकैतद्भाष्यसंदर्भे च पर्यालोचिते सकलप्राण्युपकाराय नामकीर्तनमाहात्म्याभिधाने संगतिरत्रास्तीति मत्वा नामकीर्तनमाहात्म्याभिधानायैव सहस्रनामभाष्यमारब्धं भगवत्पादैरित्यर्थस्य विस्पष्टत्वात् । यथा शारीरकभाष्यस्य प्राधान्येन शारीरकाभिन्नपरब्रह्मविषयकत्वेऽपि शारीरकभाष्यत्वप्रसिद्धिस्तथा सहस्रनामभाष्यस्य सहस्रनामान्तर्गतनामभ्योऽभिन्नानां विष्णुशिवनाम्नां माहात्म्यभाष्यस्य च सहस्रनामभाष्यत्वप्रसिद्धिरुपपन्नैव । विस्पष्टैवात्र मूले नाममाहात्म्याभिधानसंगतिः, अस्मिन्भाष्ये नाममाहात्म्योपपादनात् ।

तत्र "श्रुत्वा धर्मानशेषेण पावनानि च सर्वशः । युधिष्ठिरः शांतनवं पुनरेवाभ्यभाषत ॥" इति जनमेजयं प्रति वैशम्पायनवाक्यसंदर्भस्य व्याख्यानरूपे 'धर्मान् अभ्युदयनिःश्रेयसोत्पत्तिहेतुभूतान्वेदलक्षणान्[1] अशेषेण कार्त्स्न्येन पावनानि पापक्षयकराणि च सर्वशः सर्वप्रकारैः श्रुत्वा युधिष्ठिरः धर्मपुत्रः शांतनवं शंतनुपुत्रं भीष्मं सकलपुरुषार्थसाधनभूतं सुखसंपादनमनुक्तमिति मत्वा पुनः भूय एव अभ्यभाषत प्रश्नं कृतवान्' इति भाष्ये 'चोदनालक्षणान्' इति 'वेदलक्षणान्' इति च पाठद्वयस्यापि वेदबोधितानित्येवार्थः । पापक्षयकराणि च प्रायश्चित्तानि चेत्यर्थः । सर्वप्रकारैः । सहेति शेषः । अयमर्थः—सकलधर्माणां सकलप्रायश्चित्तानां चाङ्गत्वेनापेक्षितसकलनियमैः सह सकलधर्मान्सकलप्रायश्चित्तानि च श्रुत्वेति । अत्र भाष्ये

---

1. 'चोदनालक्षणान्' इति पाठान्तरम् ।

धर्मानित्यस्याभ्युदयनिःश्रेयसोत्पत्तिहेतुभूतान्वेदलक्षणानित्युक्तं युक्तमेव । अध्ययनगुरुकुलवासपितृमातृशुश्रूषादिब्रह्मचारिधर्माणाम् अध्यापनज्योतिष्टोमादियजनयाजनदानप्रतिग्रहपञ्चयज्ञाचरणादिगृहस्थधर्माणां बहुनियमरूपवानप्रस्थधर्माणां गायत्र्यादिजपदेवतार्चनदहरोपासनादिसाधारणधर्माणां प्रणवजपादियतिधर्माणां नित्यानित्यवस्तुविवेक इहामुत्रार्थफलभोगविरागः शमादिषट्कसंपत्तिर्मुमुक्षुत्वं चेति साधनचतुष्टयश्रवणमनननिदिध्यासनप्रणवोपासनादीनां परमहंसयतिधर्माणां वर्णधर्माणां स्त्रीधर्माणामन्येषां धर्माणां च वेदेषु कर्मकाण्डोपासनाकाण्डज्ञानकाण्डेषु विहिततया दृश्यमानानां भारते शान्तिपर्वणि 'श्रुत्वा धर्मान्–' इति वैशम्पायनवाक्यात्प्रागानुशासनिकपर्वण्युक्तानां तेषां सर्वेषामभ्युदयनिःश्रेयसहेतुभूतधर्माणां वेदोक्ताभिधानस्यावश्यकत्वात् 'यदिहास्ति तदन्यत्र यन्नेहास्ति न तत्क्वचित्' इति प्रतिज्ञापूर्वकं भारते सकलधर्माणामुक्तत्वात् तत्प्रतिज्ञावाक्यस्य अत्र भारते यो धर्मो नास्ति स वेदेऽपि नास्तीत्यर्थकताया विस्पष्टत्वात् शान्त्यानुशासनिकपर्वणोरेव सकलधर्माणामुक्तत्वात् इतरपर्वसु धर्माभिधानस्याल्पत्वात् सकलधर्माणां प्रागभिहितत्वादेवात्र 'श्रुत्वा धर्मानशेषेण––' इति वाक्ये परमहंसयतिधर्मभिन्नधर्मा एव विवक्षिता इति वा गृहस्थधर्मव्यतिरिक्ता धर्मा विवक्षिता इति वास्य वैशम्पायनवाक्यस्य तद्भाष्यस्य च तात्पर्यमिति कल्पनमयुक्तमेव । तथा कल्पने परमहंसयतिधर्मा वा गृहस्थधर्मा वा वेदोक्ता न भवन्तीति वैशम्पायनवाक्यस्याभ्युदयनिः श्रेयसोत्पत्तिहेतुभूतान्वेदलक्षणान्धर्मान्कार्त्स्न्येन श्रुत्वेति भाष्यस्य चाशयकल्पनापत्तेः । अत्र सकलपुरुषार्थसाधनभूतं सुखसंपादनमनुक्तमिति मत्वेति भाष्यम् 'श्रुत्वा धर्मान्–' इति वैशम्पायनवाक्यरूपोपक्रमे निर्णीतार्थाभिधायकमेव । तथा हि––अयं हि वैशम्पायनवाक्यस्यास्य पर्यवसन्नोऽर्थोऽवगम्यते–सकलपुरुषार्थानां सकलपापक्षयाणां च बहुप्रकारसापेक्षसाधनानि सर्वाणि श्रुत्वा धर्मपुत्रः पुनः पृष्टवानिति । तथा च यथोपक्रमाधिकरणे 'अग्नेर्ऋग्वेदो वायोर्यजुर्वेद

आदित्यात्सामवेदः ' इत्युपक्रम्य ' उच्चैर्ऋचा क्रियते उपांशु यजुषा उच्चैः साम्ना ' इत्युक्तश्रुतिसंदर्भे तत्रोपक्रमे वेदानामुत्पत्त्यभिधानात्तत्संस्पर्शेन किंचिद्विधास्यत इति निर्धारितमित्युक्तं तथा अत्रापि वैशम्पायनवाक्यरूपोपक्रमे सकलपुरुषार्थानां सकलपापक्षयाणां चेति सकलप्रयोजनानां बहुप्रकारसापेक्षसाधनानि सर्वाणि श्रुत्वा धर्मपुत्रः पुनः पृष्टवानित्युक्त्या सकलप्रयोजनानां प्रकारानिरपेक्षसाधनं पृष्टवानिति निर्धारितमिति तन्निर्धारितार्थ एव ' सकलपुरुषार्थसाधनभूतं सुखसंपादनमनुक्तमिति मत्वा ' इति भाष्येणोक्त इति ह्यवगम्यते । अथ वा ' श्रुत्वा धर्मान्— ' इति वैशम्पायनवाक्यस्यायं पर्यवसन्नोऽर्थः— सकलपुरुषार्थरूपाणां सकलपापक्षयरूपाणां च सकलप्रयोजनानां साधनानि बहुप्रकारसापेक्षतया दुःखसंपाद्यानि सर्वाणि श्रुत्वा पुनः पृष्टवानिति । तथा च यथा ऊपांशुयाजाधिकरणे ' जामि वा एतद्यज्ञस्य क्रियते यदन्वञ्चौ पुरोडाशौ ' इत्युपक्रम्य ' उपांशुयाजमन्तरा यजति विष्णुरुपांशु यष्टव्योऽजामित्वाय प्रजापतिरुपांशु यष्टव्योऽजामित्वाय अग्नीषोमावुपांशु यष्टव्यावजामित्वाय ' इत्युक्तश्रुतिसंदर्भस्योपक्रमेऽभिहितं पुरोडाशद्वयनैरन्तर्ये जामितादोषाभिधानादुपक्रम एवैतद्व्यवसिते नूनमन्तराले किंचिद्विधित्सितमिति तथात्रापि वैशम्पायनवाक्यरूपोपक्रमे सकलपुरुषार्थरूपाणां सकलपापक्षयरूपाणां च सकलप्रयोजनानामङ्गोपाङ्गरूपबहुप्रकारसापेक्षत्वप्रतिपादनेन दुःखसंपाद्यत्वरूपदोषप्रदर्शनात्तद्दोषरहितं प्रकारसामान्यनैरपेक्ष्येण सुखसंपाद्यं सकलपुरुषार्थानां सकलपापक्षयाणां च साधनं पृष्टवानिति निर्धारितम् । स च निर्धारितार्थ एव ' सकलपुरुषार्थसाधनभूतम् ' इति भाष्येणाभिहितः । अस्यार्थस्य भाष्यविवक्षितत्वं सिद्धमेव । तथा हि— सकलपुरुषार्थानां सकलपापक्षयाणां च प्रकारसापेक्षसाधनानि सर्वाणि श्रुत्वा पुनः पृष्टवानित्युक्ते सकलपुरुषार्थसाधनभूतं प्रकारानिरपेक्षसाधनं पृष्टवानित्येवात्र वक्तव्यम्, सापेक्षसाधनानि श्रुत्वा पृष्टवानित्युक्ते निरपेक्षसाधनं पृष्टवानित्यर्थस्य विस्पष्टतयावधारणात्

तथापि भाष्यकृद्भिः सुखसंपाद्यत्वहेतुभूतं प्रकारनिरपेक्षमित्यनुक्त्वा तत्साध्यं सुखसंपाद्यत्वमेवोक्तम् , 'सुखसंपादनम्' इति भाष्येण । एवं प्रष्टव्यधर्मस्यात्र भाष्ये सुखसंपाद्यत्वोक्तिः श्रुतानां सकलधर्माणां सकलप्रायश्चित्तानां च दुःखसंपाद्यत्वरूपदोषवत्त्वं वैशम्पायनवाक्येन दर्शितमित्यवगमनार्थैवेति ह्यवश्यं वक्तव्यम्, अन्यथा प्रष्टव्यसाधनं प्रकारनिरपेक्षमित्यभिधानमपहाय 'सुखसंपादनम्' इत्युक्तेर्वैयर्थ्यापत्तेः । अतः सिद्धम् 'सुखसंपादनम्' इति भाष्येणास्मिन्वैशम्पायनवाक्येऽभिहितानां धर्माणां प्रायश्चित्तानां च दुःखसंपाद्यत्वरूपदोषवत्त्वं दर्शितमिति, वैशम्पायनवाक्योक्तानां धर्माणां प्रायश्चित्तानां च तद्वाक्येन दुःखसंपाद्यत्वरूपदोषवत्त्वं वैशम्पायनवाक्यगतेन सर्वप्रकारार्थकेन 'सर्वशः' इत्यनेन तद्वाक्योक्तानां धर्माणां प्रायश्चित्तानां चेति सर्वेषां साधनानां प्रकारसापेक्षत्वप्रतिपादनेन तत्सापेक्षत्वस्य दुःखसंपाद्यत्वहेतुत्वेन च वैशम्पायनवाक्ये तद्दुःखसंपाद्यत्वहेतुप्रतिपादनेन तेषां दुःखसंपाद्यत्वरूपदोषवत्त्वस्य दर्शितत्वात् ।

नन्वेतावन्मात्रेणात्रोपांशुयाजाधिकरणोदाहरणमसंगतमेव ; उपांशुयाजाधिकरणे हि 'जामि वा एतद्यज्ञस्य क्रियते' इति जामितादोषस्य प्रतिपादितत्वेन, अत्र तु वैशम्पायनवाक्ये दुःखसंपाद्यत्वरूपदोषं प्रति हेतुमात्रस्यैव प्रतिपादितत्वेन वैलक्षण्यादिति चेत्; नायं दोषः, अवगमितार्थस्यापि कण्ठरवेणोक्तार्थसमानत्वात् । तथा हि— श्रुत्यावगमितार्थः किं केवलं न्यायकल्पितार्थ एव अथ वा श्रुत्युक्तार्थसमानः । नाद्यः, उपांशुयाजाधिकरणेऽन्तराले किंचिद्विधित्सितमित्यर्थस्य न्यायलभ्यत्वाङ्गीकारापत्त्या उपक्रमनिर्धारितार्थविरोधेन 'विष्णुरुपांशु—' इत्यादिवाक्यानामर्थवादत्वाङ्गीकारस्यायुक्तत्वापत्त्या तदधिकरणोच्छेदापत्तेः 'न हि वाचनिकार्थे न्यायः प्रवर्तते' इति मीमांसकानां प्रवादेन स्मृतिवचनापेक्षयापि न्यायानां दौर्बल्यप्रदर्शनेन श्रुत्यपेक्षया न्यायानां दौर्बल्यस्य कैमुतिकन्यायसिद्धत्वात् । एवं वेदोपक्रमाधिकरणस्योच्छेदापत्तेश्च । द्वितीयपक्षे त्विष्टापत्तिः । अत

एवं मिमांसकैरश्वप्रतिग्रहेष्ट्यधिकरणे 'प्रजापतिर्वरुणायाश्वमनयत् , स स्वां देवतामार्च्छत्, स पर्यदीर्यत' इत्युपक्रमे यस्य दोषोऽभिहितः तस्यैव तद्दोषपरिहारोऽपि कण्ठरवेणोक्तः 'स एतं वारुणं चतुष्कपालम-पश्यत्, तं निरवपत्, ततो वै स वरुणपाशादमुच्यत' इति । एवमुपक्रमे कण्ठरवेणोक्तार्थे यावद्बलमाश्रित्य तदनुसारेणोपसंहारे लक्षणाङ्गीकृता । तथैवोपांशुयाजाधिकरणे जामितादोषतद्धेतुभूतपुरोडाशनैरन्तर्ययोरभिधाना-न्यथानुपपत्त्या तद्दोषनिवृत्तये अन्तराले किंचिद्विधित्सितमिति कल्पिते श्रुत्यावगमितार्थे, तथा वेदोपक्रमाधिकरणे उपक्रम एव वेदानां किंचि-द्विधित्सितमिति कल्पिते श्रुत्यावगमितार्थे च ततोऽधिकबलमाश्रित्य तदनु-सारेण 'उपांशुयाजम्---' इत्यत्र विधिकल्पना 'विष्णुरुपांशु--' इत्यादीनामर्थवादता 'उच्चैर्ऋचा क्रियते' इत्यादिषु लक्षणा चाश्रिता । प्रत्युताश्वप्रतिग्रहेष्ट्यधिकरणे उपक्रमे कण्ठरवेणोक्तार्थबलापेक्षयाधिकबलमे-वोपांशुयाजाधिकरणे उपक्रमे कल्पितार्थे प्रतीयते । अश्वप्रतिग्रहेष्ट्यधि-करणे उपक्रमेऽभिहितार्थविरोधेन 'यावतोऽश्वान्प्रतिगृह्णीयात्--' इति वाक्ये 'प्रतिगृह्णीयात्' इत्येकपदस्य स्वार्थपरित्यागेन लाक्षणिकार्थस्यैव ग्रहणात् उपांशुयाजाधिकरणे उपक्रमे कल्पितार्थविरोधेन विष्ण्वादीनां त्रयाणां वाक्यानां स्वार्थपरित्यागेन लाक्षणिकार्थस्य ग्रहणात् । अतः कण्ठरवेणोक्तार्थसामर्थ्यापेक्षयावगमितार्थसामर्थ्ये न्यूनताकल्पनागन्धस्यापि नावकाशः । किं च बहुप्रकारसापेक्षाणां सकलधर्माणां सकलप्रायश्चित्तानां च दुःखसंपाद्यत्वरूपदोषवत्त्वस्य प्रत्यक्षप्रमाणसिद्धत्वेन तद्दोषवत्त्वमत्र विवक्षितमित्यर्थज्ञापकस्यैवापेक्षितत्वेन प्रमाणान्तरसिद्धदोषवत्त्वाभिधायक-वाक्यस्यात्रानपेक्षितत्वेन वैयर्थ्यं स्यादित्यत्र दोषवत्त्वं नोक्तमित्यर्थस्य विस्पष्टत्वेन चात्र कण्ठरवेण दोषवत्त्वोक्त्यभावो दोष इति कल्पनागन्ध-स्यापि नावकाशः । अतः सिद्धमत्र वैशम्पायनवाक्ये बहुप्रकारसापेक्षतया दर्शितानां सकलधर्माणां सकलप्रायश्चित्तानां च दुःखसंपाद्यत्वरूपदोषवत्त्व-

प्रदर्शनम् । अत एवात्रोपांशुयाजाधिकरणन्यायावतरणं च सिद्धमेवेति सर्वज्ञशिखामणिभिराचार्यैरवगमितार्थे न काप्यनुपपत्तिः । तथा च वैशम्पायनवाक्यरूपोपक्रमे सकलपुरुषार्थसाधनानां सकलपापक्षयसाधनानां च बहुप्रकारसापेक्षत्वहेतुना दुःखसंपाद्यत्वरूपदोषवत्त्वप्रदर्शनात्तदुपक्रम एव तद्दोषवत्त्वरहितं सुखसंपाद्यं सकलपुरुषार्थानां सकलपापक्षयाणां च साधनं किंचित्पृष्टवान्युधिष्ठिर इत्यर्थः सिद्धः । स एवोपक्रमे निर्णीतार्थोऽभिहितः 'सकलपुरुषार्थहेतुभूतं सुखसंपादनम्' इति भाष्येण । अत्र 'सकलपुरुषार्थहेतुभूतम् ' इति भाष्यं सकलपापक्षयहेतुभूतमित्यर्थोपलक्षणमित्यवश्यं वाच्यम्, अत्र वैशम्पायनवाक्ये पुरुषार्थसाधनानां सर्वेषामिव पापक्षयसाधनानां सर्वेषामपि दुःखसंपाद्यत्वरूपदोषवत्त्वप्रदर्शनस्य समानत्वेन सकलपुरुषार्थानां निर्दुष्टसाधनकल्पनस्येव सकलपापक्षयाणामपि निर्दुष्टसाधनकल्पनस्यावश्यिकत्वेन ' सकलपुरुषार्थ–' इति भाष्यस्य सकलपापक्षयसाधनाभिधायकताया अप्यावश्यिकत्वात् । तथा चास्य भाष्यस्य सकलपुरुषार्थानां सकलपापक्षयाणां च हेतुभूतं सुखसंपादनमनुक्तमित्यर्थं पृष्टवानित्यर्थः सिद्धः । यस्य धर्मस्य सकृदनुष्ठानेनैव सकलधर्मरूपसाधनानि सकलप्रायश्चित्तरूपसाधनानि च सर्वाण्यनुष्ठितानि स्युः तत्साधनं प्रकारसामान्यानपेक्षं पृष्टवानिति पर्यवसन्नोऽर्थः ।

कथं पृष्टवान्धर्मपुत्र इत्याकाङ्क्षायामुक्तम्— ' को धर्मः सर्वधर्माणां भवतः परमो मतः ' इति । एतत्प्रश्नवाक्यस्य व्याख्यानरूपमिदं भाष्यम्— ' को धर्मः पूर्वोक्तलक्षणः सर्वधर्माणां सर्वेषां धर्माणां मध्ये भवतः परमः प्रकृष्टः मतः अभिप्रेत इति पञ्चमः प्रश्नः ' इति । अस्मिन्भाष्ये ' पूर्वोक्तलक्षणः ' इत्यस्याभ्युदयनिःश्रेयसहेतुत्वेन सकलदुरितनिरासकत्वेन वेदबोधित इत्यर्थः, पूर्वम् ' श्रुत्वा धर्मानशेषेण— ' इत्यस्य व्याख्यानभाष्ये ' धर्मान् अभ्युदयनिःश्रेयसोत्पत्तिहेतुभूतान्वेदलक्षणान् ' इत्युक्तत्वात् वैशम्पायनवाक्यरूपपरमोपक्रमे सकलपुरुषार्थानां सकलपापक्षयाणां

च साधनभूतः प्रकारानियमानपेक्ष एव प्रष्टव्यधर्म इति निर्धारितत्वेनात्रापि तस्यैव धर्मस्य प्रष्टव्यताया आवश्यिकत्वाच्च । तथा च सकलपुरुषार्थानां सकलपापक्षयाणां च हेतुभूतस्य प्रश्नविषयीभूतधर्मस्यास्योत्कृष्टत्वं नाम दुःखसंपाद्यत्वात्मकदोषराहित्यरूपं सुखसंपाद्यत्वमेव, सकलधर्माणां दुःखसंपाद्यत्वात्मकदोषवत्त्वरूपनिकृष्टताया दर्शितत्वात् । देवदत्ते दोषवत्त्वं यज्ञदत्ते दोषराहित्यं च वदता विष्णुमित्रेण दोषवति निकृष्टत्वं दोषरहित उत्कृष्टत्वं चोक्तमेवेत्यर्थस्य सर्वानुभवसिद्धत्वात्, दोषवत्पदार्थापेक्षया दोषरहितपदार्थ उत्कृष्ट एवेत्यर्थे सिद्धवत्कृत्यैव मूले भाष्ये च प्रष्टव्यधर्मस्योत्कृष्टत्वमुक्तमित्यर्थस्य विस्पष्टत्वात् । अस्मिन्निर्दुष्टत्वरूपोत्कृष्टत्वे को हेतुरित्याकाङ्क्षापूरकः प्रकारशब्दोक्ताङ्गनियमलेशस्याप्यनपेक्षत्वरूप एव हेतुरित्यवश्यमङ्गीकार्यम्, परमोपक्रमे सकलधर्माणां सकलप्रायश्चित्तानां च दुःखसाध्यत्वात्मकदुष्टत्वरूपनिकृष्टत्वे प्रकारशब्दिताङ्गनियमसापेक्षत्वरूपमेव हेतुं वदता वैशम्पायनवाक्येन तन्निरपेक्षत्वमेव प्रष्टव्यस्य निर्दुष्टत्वे हेतुरित्यर्थस्य निश्चितत्वात् । अत एव भाष्यकृद्भिर्धर्मपुत्रकृतैतत्प्रश्नस्य प्रतिवचनरूपे " एष मे सर्वधर्माणां धर्मोऽधिकतमो मतः " इति भीष्मवचने अभिहिताधिकतमत्वरूपोत्कृष्टत्वे नियमानपेक्षत्वरूपहेतुरुक्तः 'हिंसाद्रव्यान्तरपुरुषान्तरदेशकालादिनियमानपेक्षत्वमाधिक्ये कारणम् ' इति भाष्येण । अत्र प्रष्टव्यधर्मे परमोपक्रमेण निर्णीतं निर्दुष्टत्वमेव प्रश्नवाक्यरूपोपक्रमोक्तपरमत्वं तद्भाष्योक्तोत्कृष्टत्वं चेत्यवश्यं वक्तव्यत्वेन एतत्प्रश्नरूपोपक्रमानुसारेणात्रोक्तमुत्कृष्टत्वमेव तत्प्रतिवचनोक्तमधिकतमत्वं तद्भाष्योक्तमाधिक्यं चेत्यवश्यं वक्तव्यत्वेन च तदाधिक्येऽभिहितनियमानपेक्षत्वरूपहेतुरत्र निर्दुष्टत्वरूपोत्कृष्टत्वे हेतुरुक्त इत्यर्थः सिद्धः । तथा चात्र वैशम्पायनवाक्यतात्पर्याभिधायकभाष्ये 'सुखसंपादनम् ' इति प्रष्टव्यधर्मस्य निर्दुष्टत्वप्रतिपादनेन सकलधर्माणां सकलप्रायश्चित्तानां च दुःखसंपाद्यत्वरूपदोषवत्त्वमवगतमिति पूर्वमेवोक्तम् । तथा प्रतिवचनविषयकभाष्येऽस्मिन्निर्दुष्टत्व-

रूपोत्कृष्टत्वे नियमसामान्यानपेक्षत्वरूपहेतुप्रतिपादनेन सकलधर्माणां सकलप्रायश्चित्तानां च दुष्टत्वरूपनिकृष्टत्वे बहुनियमसापेक्षत्वरूपहेतुर्दर्शित एवेत्यनेनाप्यन्वयसंदर्भे उपांशुयाजाधिकरणन्यायोक्तो नोपपादनीय इति भाष्यकाराणामाशयो विस्पष्टः, भाष्ये प्रष्टव्यधर्मे निर्दुष्टतायास्तन्निर्दुष्टत्वे हेतोश्च प्रतिपादनेनात्र सकलधर्माणां सकलप्रायश्चित्तानां च दोषवत्त्वं तद्दोषवत्त्वे हेतुश्च दर्शित एवेत्यर्थस्य विस्पष्टत्वात् । अतः परमोपक्रमे निर्धारित एव सकलपुरुषार्थानां सकलपापक्षयाणां च हेतुभूतो नियमानपेक्षत्वेन निर्दुष्टः प्रष्टव्यधर्मः 'को धर्मः सर्वधर्माणां परमः' इति प्रश्नवाक्यरूपोपक्रमे पृष्ट इति सिद्धम् । तथा च सर्वधर्माणां मध्ये परमः क इति प्रश्नस्य सर्वधर्माणां मध्ये निर्दुष्टः क इत्येवार्थः । तेनात्र प्रश्नेऽभिहितसर्वधर्माणां सकलाभ्युदयनिःश्रेयसहेतुत्वं सकलपापक्षयहेतुत्वं चावगमितम् । परमोपक्रमेऽभ्युदयनिःश्रेयसहेतुभूतधर्माणां सकलप्रायश्चित्तानां च दुःखसंपाद्यत्वरूपदोषवत्त्वं प्रदर्श्य सकलाभ्युदयनिःश्रेयससकलपापक्षयाणां हेतुभूतं निर्दुष्टं साधनं प्रष्टव्यमिति निर्धारितम् । तेनात्रापि प्रश्नवाक्यरूपोपक्रमे पावनानां मध्ये चेति पृथक्प्रायश्चित्तानां कल्पनागौरवापेक्षया सर्वधर्माणामित्यत्रोक्तधर्माणामभ्युदयनिःश्रेयसहेतुत्वस्यैव सकलपापक्षयहेतुत्वस्याप्यवश्यं कल्पनीयताया युक्तत्वात्, अन्यथा प्रश्नवाक्ये प्रष्टव्यधर्मस्य सकलपापक्षयहेतुत्वाभावापत्त्या परमोपक्रमविरोधापत्तेः । निर्धारणषष्ठ्यन्तप्रयोगस्थले 'अयं ब्राह्मणानां मध्ये श्रेष्ठः' इत्यादौ श्रेष्ठस्यापि निर्धारणषष्ठ्यन्तार्थसजातीयं ब्राह्मणत्वादिकमेव सिध्यति । अतः प्रश्नवाक्योक्तसर्वधर्माणामभ्युदयनिःश्रेयसहेतुत्वमात्राङ्गीकारे प्रष्टव्यधर्मस्याप्यभ्युदयनिःश्रेयसहेतुत्वमेव लभ्येत । अत एव तेषां धर्माणां सकलपुरुषार्थहेतुत्वं सकलपापक्षयहेतुत्वं चावश्यं कल्पनीयम् । तेन प्रष्टव्यधर्मस्य सकलपुरुषार्थहेतुत्वं सकलपापक्षयहेतुत्वं निर्दुष्टत्वं च सिध्यति । अत्र सर्वेषां धर्माणां मध्ये इति भाष्यस्य परमहंसमुनिवरप्रभृतीनां गृहस्थप्रभृतीनां च सकलवर्णा-

श्रमाणामन्येषां च प्राणिनां ये वेदोक्तधर्माः सकलाभ्युदयनिःश्रेयसहेतुभूताः सकलपापक्षयहेतुभूतास्तेषां सर्वेषां मध्य इत्यर्थः, परमोपक्रमेऽस्यार्थस्य स्फुटीकृतत्वात् । तत्प्रश्नस्य प्रतिवचनरूपे ' एष मे सर्वधर्माणाम्— ' इति भीष्मवाक्ये ' सर्वधर्माणाम् ' इत्यस्याप्ययमेवार्थो ग्राह्यः, उपक्रमानुरोधात् ।

तथा चास्य प्रश्नभाष्यस्य सर्वस्यायं भावः— परमहंसयतिवरगृहस्थप्रभृतीनां सकलप्राणिनां सकलाभ्युदयनिःश्रेयसहेतुत्वेन सकलपापक्षयहेतुत्वेन च वेदोक्ता ये सर्वे धर्मास्तेषां सर्वेषां मध्ये सकलपरमहंसयतिवरप्रभृतीनां गृहस्थप्रभृतीनां च वैदिकादीनां सकलस्त्रीणां सकलवर्णाश्रमाणामन्येषां च सकलप्राणिनां सकलाभ्युदयसकलनिःश्रेयससकलपापक्षयहेतुत्वेन नियमसामान्यानपेक्षतया सुखसंपाद्यत्वेन च वेदोक्तो धर्मः क इति परमहंसयतिवरिष्ठगृहस्थश्रेष्ठादिभिरनुष्ठेयत्वेनोक्तसकलधर्माणां मध्ये क उत्कृष्ट इति पर्यवसन्नोऽर्थः ॥

न च युधिष्ठिरः सकलपुरुषार्थसाधनं सुखसंपाद्यं प्रष्टुमुद्युक्तः सुखसंपाद्यं क्लेशसंपाद्यं चेत्युभयविधसाधनविषयकान्षट् प्रश्नान्कृतवानित्यर्थप्रदर्शकभाष्यं कथमुपपन्नमिति वाच्यम्, धर्मत्वावच्छिन्नसकलधर्माणां मध्ये उत्कृष्टधर्ममेकमेव प्रष्टुमुद्युक्तस्यापि युधिष्ठिरस्यार्थादन्यानपि श्रेष्ठान्प्रष्टुमिच्छायामुत्पन्नायामन्यान्पञ्च पृष्टवानितितात्पर्यकत्वेनैतद्भाष्यस्य सुष्ठूपपन्नत्वात् ॥

एवमेतत्प्रश्नं प्रति प्रतिवचनत्वेन प्रवृत्तस्य " एष मे सर्वधर्माणां धर्मोऽधिकतमो मतः । यद्भक्त्या पुण्डरीकाक्षं स्तवैरर्चेन्नरः सदा ॥ " इति भीष्मवाक्यसंदर्भस्य व्याख्यानरूपे पञ्चमः प्रश्नः परिह्रियते । सर्वेषां वेदलक्षणानां धर्माणाम् एषः वक्ष्यमाणः धर्मः अधिकतमोऽभिप्रेतः यत् भक्त्या तात्पर्येण पुण्डरीकाक्षं हृदयपुण्डरीके प्रकाशमानं वासुदेवं स्तवैः गुणसंकीर्तन-

लक्षणैः स्तुतिभिः सदा अर्चेत् सत्कारपूर्वकमर्चनं करोति नरः मनुष्यः इति यत् एष धर्म इति संबन्धः । ' अस्य स्तुतिलक्षणस्यार्चनस्याधिक्ये किं कारणम् ? उच्यते—हिंसाद्रव्यान्तरपुरुषान्तरदेशकालादिनियमानपेक्षत्व-माधिक्ये कारणम् । " ध्यायन्कृते यजन्यज्ञैस्त्रेतायां द्वापरेऽर्चयन् । यदाप्नोति तदाप्नोति कलौ संकीर्त्य केशवम् ॥" इति विष्णुपुराणवचनम् ' इति भाष्यसंदर्भे 'सर्वेषां वेदलक्षणानाम्' इत्यस्य ब्रह्मचारिगृहस्थपरम-हंसयतिवर्यादिभिः सकलवर्णाश्रमैः स्त्रीभिरन्यैश्च सकलप्राणिभिरनुष्ठेयत्वेन वेदोक्तानां सकलाभ्युदयसकलनिःश्रेयससकलपापक्षयहेतुभूतसकलधर्माणां मध्ये इत्यर्थः, उपक्रमानुसारादित्यनुपदमुक्तत्वात् । 'यद्भक्त्या–' इत्यादा-वरुणाधिकरणन्यायेन 'भक्त्या पुण्डरीकाक्षं स्तवैः' इति कारकाणाम् 'अर्चेत्' इति क्रिययान्वयः । 'सदा' इति विशेषणस्यापि 'अर्चेत्' इति प्रधानेनान्वयः । तथा चात्र विशेषालंकारमाश्रित्य वाक्यार्थो वर्णनीयः । तथा हि–विशेषालंकारस्वरूपादिकं दर्शितं कुवलयानन्दे– 'किंचिदारम्भ-तोऽशक्यवस्त्वन्तरकृतिश्च सः । त्वां पश्यता मया लब्धं कल्पवृक्ष-निरीक्षणम् ॥ स्फुरदद्भुतरूपमुत्प्रतापज्वलनं त्वां सृजतानवद्यविद्यम् । विधिना ससृजे नवो मनोभूर्भुवि सत्यं सविता बृहस्पतिश्च ॥ अत्राद्ये राजदर्शना-रम्भेण कल्पवृक्षदर्शनरूपाशक्यवस्त्वन्तरकृतिः, द्वितीये राजसृष्ट्यारम्भेण मनोभवादिसृष्टिरूपाशक्यवस्त्वन्तरकृतिः' इति संदर्भेण । अत्र कुवल-यानन्दसंदर्भमूलभूतचन्द्रालोकोक्तविशेषालंकार एव '–वस्त्वन्तरकृतिश्च सः' इत्युदाहृतकुवलयानन्दसंदर्भगत— 'सः'– इति तच्छब्दार्थः । 'आद्ये राजदर्शनारम्भेण कल्पवृक्षदर्शनरूपाशक्यवस्त्वन्तरकृतिः' इति वाक्यस्य राजदर्शनारम्भ एव राजदर्शनाय कृतः प्रयत्न एव कल्पवृक्ष-दर्शनरूपाशक्यवस्त्वन्तरारम्भः अशक्यवस्त्वन्तरलाभाय प्रयत्नः राजदर्शन-कर्तुः कल्पवृक्षदर्शनेनेष्टसिद्धिरूपं यत्फलं तत्फलं राजदर्शनेनैव स्यादिति पर्यवसन्नोऽर्थः । एवमेव हि द्वितीयोदाहरणेऽपि । तथा 'यद्भक्त्या पुण्डरीकाक्षम्' इत्यादिसंदर्भे तद्भाष्ये च पुण्डरीकाक्षस्तवारम्भेण भक्तिसा-

तत्यादरान्वितपुण्डरीकाक्षार्चनरूपाशक्यवस्त्वन्तरकृत्यात्मको विशेषालंकारः सिद्धः । अस्यापि संदर्भस्य पुण्डरीकाक्षस्तवारम्भ एव पुण्डरीकाक्षस्तवकरणमेव भक्तिसातत्यादरयुक्तार्चनकरणं भक्तिसातत्यादरयुक्तार्चनफलप्रदमिदं केवलस्तवमात्रमिति हि पर्यवसन्नोऽर्थः, 'त्वां पश्यता मया लब्धं कल्पवृक्षनिरीक्षणम्' इत्यादिषु सर्वसंमतविशेषालंकारलक्षणलक्ष्यत्वस्यैव पुण्डरीकाक्षस्तवकरणेन भक्तिसातत्यादरयुक्तं त्रिविधं पुण्डरीकाक्षार्चनं करोतीत्यस्मिन्नर्थेऽपि समानतयैव विशेषालंकारलक्षणलक्ष्यत्वस्य दृश्यमानत्वात्, तत्रोक्तराजदर्शनकल्पवृक्षदर्शनयोरभिन्नयोः कार्यकारणभावावगमस्येवात्रापि पुण्डरीकाक्षविषयकयोः स्तवकरणार्चनकरणयोरभिन्नयोः कार्यकारणभावावगमस्य समानत्वात् । एवं च भक्तिसातत्यादरसहितत्रिविधार्चनफलहेतुं केवलस्तवमेव 'यद्भक्त्या पुण्डरीकाक्षं स्तवैरर्चेन्नरः सदा' इत्यनेनानूदितस्य 'एष मे सर्वधर्माणां धर्मोऽधिकतमो मतः' इत्यनेन सर्वधर्माधिक्यं विहितमिति सिद्धम् । अत्रोक्तार्थः सर्वोऽपि 'अस्य स्तुतिलक्षणस्यार्चनस्याधिक्ये किं कारणम्' इति प्रश्नभाष्ये विस्पष्ट एव । अस्मिन्भाष्ये 'अस्य स्तुतिलक्षणस्यार्चनस्य' इत्यनेन स्तुतिरेवात्रार्चनशब्दार्थोऽपि, न तु स्तुतिशब्दार्थव्यतिरेकेणार्चनशब्दार्थोऽन्योऽस्तीत्यर्थः। तथा केवलस्तुतेरेवात्र सर्वधर्माधिक्यं विवक्षितमित्यर्थश्च विस्पष्ट इति सिद्धमेव ॥

केवलस्तवस्य सर्वधर्माधिक्ये कारणं चोक्तम् 'हिंसाद्रव्यान्तरपुरुषान्तरदेशकालादिनियमानपेक्षत्वमाधिक्ये कारणम्' इति भाष्येण । अस्मिन्भाष्ये प्रकृतस्तवस्य सर्वधर्माधिक्यहेतुभूतानियमानपेक्षत्वाभिधानेन हिंसाद्रव्यान्तरादिषड्विशेषणैः सकलनियमानपेक्षत्वं कतिपयनियमसापेक्षत्वं च दर्शितमिति पक्षे उपक्रमाविरोधो विस्पष्टः, उपक्रमे नियमसामान्यापेक्षारहितधर्म एव पृष्ट इत्यर्थस्य सम्यग्दर्शितत्वात् । एवमेतैः षड्भिरपि विशेषणैः प्रकृतस्तवस्य नियमलेशोऽप्यनपेक्षित इत्यर्थः सकृदवगमित इति पक्षे तु भाष्ये 'नियमसामान्यानपेक्षत्वमाधिक्ये कारणम्' इत्येव पाठापत्तिः, षड्विशेषण-

पाठस्य वैयर्थ्यापत्तिश्च । अतोऽस्मिन्भाष्ये नियमसामान्यानपेक्षत्वदृढीकरणाय नियमसामान्यानपेक्षत्वं हिंसादिषड्विशेषणैर्बहुधा दर्शितमित्यर्थ एव युक्तः ।

अत्र हिंसानपेक्षत्वरूपविशेषणेनास्यार्चनस्य पत्रपुष्पादिसमर्पणत्वरूपार्चनविशेषत्वं वारितम्, तथा प्रकृतार्चनं स्तुतिविशेषरूपमेवेत्यवगमितं च, अर्चनविशेषे पत्रपुष्पफलहिंसापेक्षायाः सिद्धत्वेन प्रकृतार्चने हिंसासापेक्षार्चनविशेषत्ववारणाय स्तुतिरूपार्चनविशेषत्वानिर्णयाय च हिंसानपेक्षत्वमुक्तमिति तद्भाष्ये स्वरसतोऽवगमात्, प्रकृतार्चनेऽर्चनत्वमादाय पत्रपुष्पादिहिंसां विना हिंसान्तरस्य प्रसक्त्यभावात् प्रकृतार्चनविशेषेऽर्चनत्वसामान्येन प्रसक्तधर्मव्यावृत्त्यर्थकानीमानि षड्विशेषणानीत्यवश्यं वक्तव्यत्वात्, एतेषां षड्विशेषणानामपि प्रकृतार्चनविशेषे प्रसक्तधर्मव्यावर्तकत्वं विनाप्रसक्तधर्मव्यावर्तकत्वाङ्गीकारेऽस्य भाष्यस्यासंमतत्वापत्तेः । अतः सिद्धमस्यार्चनस्य हिंसानियमानपेक्षत्वप्रतिपादकभाष्येण स्तुतिरूपत्वम् । एवम् ‘ द्रव्यान्तरनियमानपेक्षत्वम् ’ इति भाष्येण स्तुतिरूपार्चनमेव प्रकृतार्चनं न त्वन्यदप्यर्चनमित्यर्थोऽवगमितः । कायिकमानसिकवाचिकार्चनानां बाह्यद्रव्यमानसिकद्रव्यवाचिकद्रव्यापेक्षायाः सिद्धत्वेन प्रकृतार्चनविशेषे तत्त्रिविधार्चनविशेषविलक्षणकेवलस्तुतिरूपत्वमेवेत्यवगमयितुमेतद्भाष्येण द्रव्यान्तरानियमानपेक्षत्वमुक्तमित्यवश्यमङ्गीकर्तव्यत्वात् अन्यथा द्रव्यान्तरानियमानपेक्षत्वप्रतिपादकभाष्यस्य प्रयोजनान्तरप्रसक्त्यभावेन वैयर्थ्यापत्तेः । अतः सिद्धं हिंसानियमानपेक्षत्वस्य द्रव्यान्तरानियमानपेक्षत्वस्य च प्रतिपादकभाष्याभ्यां प्रकृतार्चनस्य स्तुतिरूपत्वमेव दर्शितमिति ॥

एवं पुरुषान्तरनियमानपेक्षत्वप्रतिपादकभाष्येणास्य स्तुतिरूपार्चनस्योपदेष्टृरूपपुरुषान्तरनियमानपेक्षत्वमेव दर्शितम्, अन्यथा पुरुषान्तरनियमापेक्षत्वाभिधायकभाष्यस्योपरोधापत्तेः । श्रौतस्तुतिरूपार्चनानां स्मार्तस्तुतिरूपार्चनानां चोपदेष्टृनियमापेक्षायाः सुप्रसिद्धत्वेन स्तुतिविशेषरूपार्चने-

ऽपि स्तुतिरूपार्चनत्वेन प्रसक्तोपदेष्टृपुरुषान्तरानियमापेक्षत्वव्यावर्तकत्वस्या- वश्यकत्वात् ॥

एवमुपदेष्टृनियमानपेक्षत्वप्रतिपादनेन प्रकृतस्तवस्य देशनियमकाल- नियमाधिकारिविशेषनियमपूर्वोत्तराङ्गनियमश्रद्धाभक्तिवैराग्यादिनियमसामा - न्यापेक्षाराहित्यं दर्शितम् । यत्किंचिन्नियमापेक्षत्वेऽपि तन्नियमोपदेशाद्युप- देष्टृनियमापेक्षित्वस्यावश्यकत्वेन पुरुषान्तरनियमानपेक्षित्वाभिधायकभाष्य- स्योपरोधापत्तेः उपक्रमानुगुणतयैतदर्थाभिधानस्यावश्यकत्वाच्च ॥

एवं यत्किंचिन्नियमापेक्षाया अपि राहित्यप्रदर्शनेनास्य स्तवस्य नामकीर्तनरूपत्वमेव दर्शितम् ' हरिसंकीर्तनस्यास्य नोपदेशः कथंचन । किं तु ब्रवीमि सौम्य त्वं कथयस्वाशुचिर्न च ॥ ' इति ब्रह्माण्डपुराणादौ नामकीर्तनस्योपदेशानपेक्षतायाः सुप्रसिद्धत्वात् । एवं देशनियमानपेक्षत्वा- भिधायकभाष्येण प्रकृतस्तुतिः स्तुतिरूपार्चनत्वेन प्रसक्तो देशनियमः सर्वोऽपि वारितः, वैदिकस्तुतिरूपार्चनं स्मार्तस्तुत्यादिरूपार्चनं च श्मशान- चण्डालवाटिकादिनिषिद्धदेशेषु न कार्यमनिषिद्धदेशेष्वेव कार्यमिति वैदिक- स्तुत्यादिरूपार्चनस्य देशनियमापेक्षायाः सुप्रसिद्धत्वेन प्रकृतस्तुतौ तत्सा- पेक्षत्ववारणस्यावश्यकत्वात्, उपक्रमानुसारेणास्यार्थस्यावश्यं वक्तव्यत्वाच्च ।

एवं प्रकृतस्तवस्य देशनियमसामान्यानपेक्षत्वप्रदर्शनेनास्य स्तवस्य नामकीर्तनरूपत्वमवगमितम्, नामकीर्तनादन्यस्तुतेर्देशनियमसामान्यानपेक्ष- त्वसंभवात्, ' नो देशकालनियमः शौचाशौचविनिर्णयः । परं संकीर्तनादेव राम रामेति मुच्यते ॥ ' इति वैश्वानरस्मृत्यादिवचनेषु भगवन्नामकीर्तनस्य देशनियमानपेक्षतायाः सुप्रसिद्धत्वात् । एवं कालनियमानपेक्षत्वप्रतिपादक- भाष्येणापि प्रकृतस्तुतेर्नामकीर्तनत्वं दर्शितम्, अत्र श्रुतिवाक्यादिभिः क्रियमाणं स्तुतिरूपमर्चनं सूतककालाशौचकालार्धरात्रकालादिषु न कर्तव्य- मिति प्रातःकालादिप्रशस्तकालेष्वेव कर्तव्यमिति च तदर्चनस्य काल-

नियमापेक्षायाः सुप्रसिद्धत्वेन स्तुतिरूपार्चनत्वमादाय प्रसक्तकालनियमस्य स्तुतिविशेषरूपार्चनस्य प्रतिषिद्धत्वसंभवात्, 'नो देशकालनियमः' इति दर्शितवचनादौ नामकीर्तनस्य कालनियमानपेक्षतायाः सुप्रसिद्धत्वात्, 'एवमादिनियमानपेक्षत्वम्' इति भाष्येण प्रकृतस्तवस्य शास्त्रीयेतिकर्तव्यतानपेक्षत्वमवगमितम् ।

अस्मिन्भाष्ये पुरुषान्तरनियमानपेक्षत्वं देशनियमानपेक्षत्वं कालनियमानपेक्षत्वमिति त्रिभिर्वाक्यैस्त्रिवारं प्रकारभेदेन प्रकृतस्तवस्य नियमसामान्यानपेक्षत्वप्रतिपादनेनैव तद्वाक्यत्रयाबोधितनियमापेक्षत्वाभावोऽप्रसिद्ध इति सुष्ठु ज्ञातुं शक्यमेवेति । अत एव तद्वाक्यत्रयाबोधितनियमानपेक्षत्वमादिशब्दावगमितानियमानपेक्षत्वमिति भाष्याभिमतमित्यभिधानस्यासंभावितत्वेन अत एव तद्वाक्यत्रयावगतनियमसामान्यानपेक्षत्वस्यैव तद्वाक्यत्रयावगतप्रकारत्रयापेक्षया प्रकारान्तरेण बोधनमादिशब्दावगमितनियमानपेक्षत्वभाष्याभिमतमित्यवश्यमङ्गीकर्तव्यत्वात् । इतिकर्तव्यतानियमानपेक्षत्वाभिधानस्य नियमसामान्यानपेक्षत्वाभिधाने पर्यवसन्नत्वात् । एवं नियमसामान्यानपेक्षत्वप्रतिपादकेन 'आदिनियमानपेक्षत्वम्' इति भाष्येण चास्य स्तवस्य नामकीर्तनरूपत्वमेव दर्शितम् । 'विहितमखिलकर्म ब्राह्मणानां मुनीन्द्रैर्विधिनियमसमेतं शक्यते नैव कर्तुम् । तदखिलमपि हित्वा यो महादेवशब्दं पठति फलमशेषं प्राप्नुयात्सोऽनवद्यः ॥' इति ब्रह्मकैवर्तवचनादिषु नामकीर्तनस्य नियमानपेक्षतायाः सुप्रसिद्धत्वात् । तत्रैतैः षड्विशेषणैर्नामकीर्तनरूपस्तवस्य नियमसामान्यानपेक्षत्वप्रतिपादनेन धर्मत्वावच्छिन्नसकलधर्माणां स्नानसंध्यावन्दनाध्ययनजपज्योतिष्टोमवेदान्तश्रवणप्रणवजपादीनामाश्रमचतुष्टयधर्माणां वर्णचतुष्टयधर्माणामन्त्यजनधर्माणां स्त्रीधर्माणां चेति वेदोक्तसकलधर्माणामपेक्षिता ये नियमास्तन्नियमगन्धोऽप्यस्य स्तवस्य नापेक्षित एवेत्यर्थोऽर्थात्सिद्धः । एवं नामकीर्तनस्य नियमसामान्यानपेक्षत्वप्र-

तिपादनात् स्त्रीपुंनपुंसकान्यतमेन येनकेनचिज्जनेनावशेन वोन्मादेन वा श्रद्धया वा श्रद्धां विना वा चोरव्याघ्ररोगादिकृतार्तिनाशाय वा धर्मार्थकामा-न्यतमात्मकानित्यफलाय वान्यप्रयोजनाय वा यथाकथंचित्कृतनामकीर्तनेन सकलपापक्षयो मुक्तिश्च भवत्येवेत्यर्थो दर्शितः । पुरुषान्तरानपेक्षत्वप्रदर्श-कभाष्येण 'हरिसंकीर्तनस्यास्य नोपदेशः कथंचन' इति ब्रह्माण्डपुराणवच-नेन च नामकीर्तनस्योपदेशानपेक्षत्वनिर्धारणादनित्यफलाय कृतनामकीर्तने-नापि मुक्तिः सिध्यत्येव । तथा हि—नामकीर्तनेतरधर्मेऽनित्यफलाय प्रयुक्ते तत्प्रयोगेणानित्यफलमेव सिध्यति न तु तेनैव प्रयोगेण मुक्तिरपीति मुमुक्षूणां मोक्षोद्देशेनैव सर्वे धर्माः कार्या न त्वनित्यफलायेत्युपदेशो नामकीर्तनेतरध-र्माणामपेक्षितः सुप्रसिद्धः । स चोपदेशविशेषो नामकीर्तनस्य नापेक्षित इत्यर्थो दर्शितः । यथा 'नायं ब्राह्मणः' इति ब्राह्मणत्वसामान्यनिषेधेन 'नायमात्रेयगोत्रब्राह्मणः' इति ब्राह्मणत्वविशेषनिषेधस्योपदेशसामान्य-निषेधेनैवोपदेशविशेषनिषेधस्य सिद्धत्वादिति नामकीर्तनस्योपदेशानपे-क्षत्वप्रतिपादनेनानित्यफलाय कृतनामकीर्तनेन मुक्तिर्भवत्येवेति सिद्धम् । उक्तश्चायमर्थः श्रीमद्गीताशास्त्रे सप्तमाध्याये—'दैवी ह्येषा गुणमयी मम माया दुरत्यया । मामेव ये प्रपद्यन्ते मायामेतां तरन्ति ते ॥' इति मायातरणहेतुभूतं प्रपत्तिशब्दितभजनमुपक्रम्य 'चतुर्विधा भजन्ते मां जनाः सुकृतिनोऽर्जुन । आर्तो जिज्ञासुरर्थार्थी ज्ञानी च भरतर्षभ ॥' इति वचनेनार्तिनाशार्थिधनार्थ्यादय एते चतुर्विधाधिकारिणो नामकीर्तनादिरूपं तद्भजनं कृत्वा आर्तिनाशधनादिकं प्राप्य तदनुभूय पश्चाच्चित्तशुद्धिं प्राप्य मायां तरन्तीत्यर्थ उक्तः । अयमर्थः सर्वोऽप्यद्वैतसिद्धिनामकग्रन्थकारैर्म-धुसूदनानन्दसरस्वतीश्रीचरणैर्भगवत्पादीयभाष्यानुसारिण्यां गीतागूढार्थ-दीपिकायां कण्ठरवेणोक्तः । अस्मत्कृतगीतासारामृताख्यग्रन्थे भगवत्पादीय-भाष्यव्याख्यानरूपे न्यायविदां हृदयंगमोऽयमर्थो भवतीत्यभिहितः । पुराणादिवचनान्यस्मिन्नर्थे शतशः सन्ति, ग्रन्थविस्तरभियात्र न प्रदर्शि-

कानि । तथा च वचनशतैर्निर्धारित एव प्रयोजनान्तरमुद्दिश्य कृतनामकी-
र्तनेनापि मुक्तिर्भवत्येवेत्यर्थो भाष्यकारैर्दर्शित इति सिद्धम् ।

न च मूलेन वा भाष्येण वा न प्रतिपादितमप्रामाणिकं स्तवशब्दि-
तस्तुतेरर्चनत्वमत्र कथं व्यवस्थितमिति वाच्यम्, मूलेन भाष्येण च स्तवश-
ब्दितस्तुतेरर्चनतायाः सम्यक्प्रतिपादितत्वात् । तथा हि— 'कमर्चन्तः—'
इति प्रश्नस्योत्तरत्वेन प्रवृत्ते भीष्मवाक्यसंदर्भे 'तमेव चार्चयन्नित्यं भक्त्या
पुरुषमव्ययम्' इत्यनेन सामान्यतोऽर्चनमुक्त्वा तस्यैवार्चनस्य मानसवाचिक-
कायिकभेदेन त्रैविध्यमुक्तम् 'ध्यायन्स्तुवन्नमस्यंश्च' इति । एवं मूलेनोक्तं
सर्वं तद्भाष्ये विशदीकृतम् । अतो मूलभाष्याभ्यामुक्तम् । अतः प्रामाणि-
कमेव स्तुतेरर्चनत्वमिति तद्व्यवहारे न कोऽपि दोषः । अत्र स्तवरूपधर्म-
स्य सर्वधर्माधिक्ये कारणं न केवलं नियमसामान्यानपेक्षत्वमेव, किंतु
सकलधर्मफलहेतुत्वे सति नियमसामान्यानपेक्षत्वमेव कारणम् । लोके येषां
पदार्थानां मध्ये यस्य वस्तुन आधिक्यं दृश्यते तस्य वस्तुन आधिक्ये
तत्तत्फलपदार्थफलहेतुत्वे सति तत्पदार्थानामपेक्षितानियमानपेक्षताया एव
हेतुत्वदर्शनात् । तथा हि—लोके केचन माधुकरप्रदातारः कालदेशनियम-
पत्रपुष्पाद्यानयनादिनियमानपेक्ष्य करतलद्वयपरिमितमन्नं प्रयच्छन्ति ।
अन्ये तु नियमं कमप्यनपेक्ष्य यदा कदा च वा गृहे आगमनमात्रेण
झटित्यर्धकवलमात्रं माधुकरं प्रयच्छन्ति । तथापि तेषामाधिक्यं न वर्णयन्ति,
नियमानपेक्षत्वे सत्यपि महाफलाभावात् । यस्तु नियमं कमप्यनपेक्ष्य यदा
कदा वा गृहे आगमनमात्रेण पुरुषाहाराय पर्याप्तं माधुकरं झटिति प्रयच्छति
तस्य सर्वेभ्य आधिक्यं वर्णयन्ति, तत्र महाफलदत्वे सति नियमानपेक्षतायाः
सत्त्वात् । अत आधिक्ये कारणं महाफलहेतुत्वं नियमानपेक्षत्वं चेत्युभयम-
पीत्युक्तं युक्तमेव । कैश्चिद्धनार्थिभिर्ब्राह्मणैर्दशवर्षपर्यन्तमहोरात्रं
कृतसेवानियमैस्तुष्टा धनिकाः केचन दातारः शतनिष्कादिकं सहस्रनिष्का-

दिकं वा प्रयच्छन्ति, अन्यस्तु कर्णसदृशः स्वनिकटागमनमात्रेणैवान्यत्रापेक्षितं नियमं कमप्यनपेक्ष्य सहस्रनिष्कादिकं प्रयच्छति । तेषां दातॄणां मध्ये सेवारूपनियमं कमप्यनपेक्ष्य सहस्रनिष्कादिदातुरेवाधिक्यं वर्णयन्ति, धनार्थिनियमसापेक्षदातॄन्निन्दन्ति च । एवमौषधानां मध्ये कायक्लेशवित्तव्ययोगपथ्यादिनियमं कमप्यनपेक्ष्य झटिति सकलारोग्यप्रदौषधस्यैव सकलौषधानां मध्ये उत्कृष्टत्वं वदन्त्यारोग्यार्थिनः, नियमसापेक्षौषधानि निन्दन्ति च । एवं केचन भूप्रदेशविशेषाः बहुधनव्ययादिभिः संस्कारकरणबहुवाकर्षणबहुपत्रक्षेपणरूपबहुनियमानपेक्ष्य सस्यवन्तः फलन्ति । तेषां भूप्रदेशानां मध्ये यस्तु भूप्रदेशः सस्यशाली सन्नुक्तनियमं कमप्यनपेक्ष्य बहु फलति तस्यैवंभूतस्य भूप्रदेशस्याधिक्यं वदन्ति कृषिचतुराः । अतः सिद्धमुभयमप्याधिक्ये कारणमिति । अत्र भाष्यकृद्भिः सकलपुरुषार्थहेतुभूतं सुखसंपादनमनुक्तम्' इति भाष्येणोपक्रमे एवाधिक्यहेतुभूतस्य सकलपुरुषार्थहेतुत्वस्योक्तत्वेनात्र नियमानपेक्षत्वमाधिक्ये कारणमित्युक्तं भाष्ये तद्युक्तमेव ।

एवं नियमानपेक्षः स्तवो नामकीर्तनरूप एव वेदमन्त्रैः पौराणिकमन्त्रैः स्मार्तमन्त्रैश्च क्रियमाणस्यान्यस्य च स्तवस्य देशकालोपदेशकादिनियमापेक्षायाः सिद्धत्वेन नियमसामान्यानपेक्षत्वासंभवात्, भगवन्नाम्नः सर्वेषां गुणवाचकत्वेन नामोच्चारणस्य गुणिनिष्ठगुणाभिधानरूपस्तवतायाः सिद्धत्वात्, भगवन्नाम्नां गुणवाचित्वस्य 'यानि नामानि गौणानि विख्यातानि महात्मनः' इत्यत्रैव मूलेन 'गौणानि गुणयोगात्प्रवृत्तानि' इति भाष्येण च कण्ठरवेणोक्तत्वात् अस्यैव सहस्रनामभाष्यस्यान्ते 'एकैकनामस्तवनस्यापि विशेषफलसाधनत्वं सकलफलसाधनत्वं च प्रतिपादयतो विष्णुधर्माध्यायस्यैकदेशोऽत्र विष्णुनामसहस्रभाष्ये पठ्यते' इति भाष्ये 'एकैकनामस्तवनस्य' इति नामोच्चारणे स्तवनशब्दप्रयोगस्य विस्पष्टत्वाच्च । तस्मादत्रोक्तनियमनिरपेक्षः स्तवो भगवन्नामकीर्तनरूप एवेति सिद्धम् ।

अथवा ' यद्भक्त्या पुण्डरीकाक्षम् ' इत्यादिमूलस्य तद्भाष्यस्य च श्रीधरवेंकटेश्वरशास्त्रिभिर्भगवन्नामभूषणेऽभिहितोऽर्थ एवास्तु । तत्र ' स्तवैरर्चेन्नरः सदा ' इति मूलतात्पर्याभिधायकम् ' स्तुतिलक्षणस्यार्चनस्य ' इत्येतद्भाष्यम् ' स्तुतिर्लक्षणं विशेषणतया ज्ञापकं यस्य ' इत्यर्थकं सत् ' स्तवैरर्चेत् ' इति मूले स्वरसप्रतीयमानस्तवनविशिष्टार्चनपरं न मन्तव्यम् ; तथा सति सर्वधर्माधिकत्वेनोक्तस्य प्रकृतधर्मस्य तादृशार्चनरूपताया एव भाष्याभिमतत्वापत्त्या तस्याधिक्ये हिंसाद्रव्यान्तरपुरुषान्तरादिनियमानपेक्षताया हेतुत्वपर- ' हिंसापुरुषान्तर '–इति भाष्यविरोधापत्तेः अर्चनस्य पत्रपुष्पादिहिंसा पत्रपुष्पादिद्रव्यान्तरमुपदेष्टृरूपपुरुषान्तरं देशनियमः कालनियम इत्यादिसापेक्षताया विस्पष्टत्वात् । किं तु तद्भाष्यं स्तुत्यात्मकार्चनाभिधानपरं सन्मूले ' स्तवैरर्चेत् ' इत्यत्र स्तवनमेव विवक्षितम्, स्तवनविशिष्टार्चनं तु शब्दतः प्रतीयमानमपि न विवक्षितमिति प्रत्यायनात्प्रकृतधर्मः स्तवनरूप एव, न तु तद्विशिष्टार्चनरूप इति प्रत्यायनार्थम् । एवं सत्युक्तार्थप्रत्यायनार्थमत्र मूले ' स्तवनमेव विवक्षितं न तु तद्विशिष्टार्चनम् ' इत्येव वक्तव्ये 'स्तुतिलक्षणस्यार्चनस्य' इत्येवमर्चने स्तवनात्मकत्वाभिधानं तु यथा ' मुखचन्द्रः ' इत्यत्र चन्द्रे मुखात्मकत्वाभिधानं मुखे चन्द्राभेदारोपेण नियतं तथा स्तवनेऽर्चनाभेदारोपेण नियतमेवेति तस्मिन्स्तवनेऽर्चनाभेदारोपं प्रत्याययति, तत्प्रत्यायनेनार्चने स्तवनात्मकत्वाभिधानं तदारोपस्य स्तवनेऽर्चनफलसाधनत्वमादाय प्रवृत्तत्वप्रत्यायनं संपादयति । तथा संपादयत्सत् अर्चने स्तवनात्मकत्वाभिधानं तदेवार्चनफलसाधनत्वमादाय 'स्तवैरर्चेत्' इत्येवं स्तवनेऽर्चनसाधनत्वोक्तेरुपपन्नत्वप्रत्यायनार्थम् । दृश्यते हि लोके ' फलाहारेण मेऽनेन जातं मिष्टान्नभोजनम् ' इत्यादौ दृढफलाहारादौ मिष्टान्नभोजनादिजन्यतृप्त्यादिफलसाधनत्वमादाय तत्साधनत्वव्यवहारः । दृश्यते च श्रीमद्रामायणे आरण्यकाण्डे लक्ष्मणेन निर्मितां पर्णशालां दृष्ट्वा तं प्रत्यत्यन्तप्रहृष्टस्य श्रीरामस्य

कथने 'भावज्ञेन कृतज्ञेन धर्मज्ञेन च लक्ष्मण । त्वया पुत्रेण धर्मात्मा न संवृत्तः पिता मम ॥' इत्यत्र मम पिता न संवृत्तो न विनष्ट इत्यनेन विवक्षितं यद्दशरथजीवद्दवस्थानं तत्फलभूतायां श्रीरामस्य स्वप्रयत्ननिरपेक्षस्वाभिमतसकलार्थसिद्धौ लक्ष्मणस्य साधनतामादाय तस्मिँल्लक्ष्मणे 'त्वया न संवृत्तः पिता मम' इति दशरथजीवद्दवस्थानत्वव्यवहारः । तथा च "स्तवैरर्चेत्" इत्यत्र स्तवनमेव विवक्षितं न तु तद्विशिष्टार्चनमिति प्रत्यायनार्थम् । तथैवाभिधाने स्तवनमात्रं सिध्येत्, न तु स्तवनेऽर्चनफलसाधनत्वमादाय तत्साधनत्वोक्तेरुपपन्नत्वप्रत्यायनं च सिध्येदिति प्रत्यायनद्वयलाभार्थमपि 'स्तुतिलक्षणस्य' इति भाष्यांशेनार्चने स्तवनात्मकत्वाभिधानमिति पर्यवस्यति । न त्वनेनाभिधानेन यथा 'कान्तिमान्मुखचन्द्रः' इति चन्द्रे मुखात्मकत्वाभिधानेन चन्द्रेऽन्वितस्यापि कान्तिमत्त्वस्य मुखे प्रतीतिः सिध्यति । तथा मूले 'भक्त्या सदा' इत्येतदुक्तयोर्भक्तिसातत्ययोः 'स्तवैरर्चेत्' इत्यत्रार्चनस्य प्रधानभूतधात्वर्थेऽन्वितयोरप्युपपदार्थे स्तवने प्रतीतिः किं न सिध्येदिति शङ्क्यम्, 'कान्तिमान्मुखचन्द्रः' इत्यत्र मुखे चन्द्राभेदारोपस्य सिद्धतया तत्र तद्बलाच्चन्द्रेऽन्वितस्यापि कान्तिमत्त्वस्य मुखे प्रतीतिर्युज्यते । 'स्तवैरर्चेत्' इति मूले तु स्तवनेऽर्चनसाधनत्वमेवाभिधीयते । तदभेदारोपस्य तु नास्ति प्रसक्तिरिति न तद्बलादर्चनान्वितयोर्भक्तिसातत्ययोः स्तवने प्रतीत्यवकाशः, भाष्येऽर्चने स्तवनात्मकत्वाभिधानं चोक्तप्रत्ययद्वयार्थतामादाय तावतैव चरितार्थमिति भाष्ये उक्ताभिधानस्य मूलेऽर्चनान्वितयोस्तयोः स्तवने प्रतीत्यर्थत्वकल्पनाया अयुक्तत्वात् । ततश्च 'स्तवैरर्चेत्' इत्यत्र स्तवनेऽर्चनसाधनत्वस्य शब्देनाभिधानेऽपि तदभिधानस्य तत्फलसाधनत्वनिबन्धनताया उक्ततया तस्यार्चनफले वैशिष्ट्यमेव तात्पर्यविषयीभूतम् । अर्चने वैशिष्ट्यं तु शब्दतः प्रतीयमानमपि तात्पर्याविषयीभूतमिति पर्यवसानादत्र स्तवनमेव विवक्षितम्, न तु तद्विशिष्टार्चनमित्युक्तार्थस्य न क्षतिरिति । तथा च भक्तिसातत्ययोरर्चने एवान्वयस्य सिद्ध-

त्वेन स्तवनस्योक्तमर्चनफलसाधनत्वं तद्विशिष्टार्चनफलसाधनत्वस्वरूपमित्ये-तावदेव न तु तयोः स्तवने संबन्ध इत्युक्तम् । तत्र यथा स्वर्गादिसाधनी-भूतापूर्वसाधनत्वमेव ज्योतिष्टोमादीनां स्वर्गादिसाधनत्वमिति कल्पनस्योप-पन्नत्वं तथा 'स्तवैरर्चेत्' इत्यत्र तत्त्रिविधार्चनफलसाधनत्वमेव स्तवनस्य तत्त्रिविधार्चनसाधनत्वमित्यस्याप्युपपन्नत्वात्, तथा 'स्तवैरर्चेत्' इत्यत्र सर्वधर्माधिकत्वेनोक्तो धर्मः स्तवनविशिष्टार्चनं न भवति किं तु केवलस्तवन-मेवेत्युक्तमित्येतत् ।

तथा 'स्तवैरर्चेत्' इत्यत्रैव भक्तिमातत्ययोरर्चनान्वितत्वमेव, न तु स्तवनान्वितत्वमित्युक्तमित्येतच्च युक्तमेव, 'श्रुत्वा धर्मानशेषेण–' इति वैशम्पायनवाक्यरूपपरमोपक्रमानुसारात्, तस्मिन्परमोपक्रमे हि प्रष्टव्य-धर्मस्य नियमसामान्यानपेक्षत्वेन सुखसंपाद्यताया दर्शितत्वात् । अन्यथा तदुपक्रमविरोधापत्तेः । तथा नियमसामान्यानपेक्षत्वेन सर्वधर्माधिकत्वेन चोक्तस्य केवलस्तवस्य 'हिंसाद्रव्यान्तरपुरुषान्तर'– इत्यादिभाष्ये नाम-कीर्तनरूपत्वमवगमितमित्यनुपदमेवोक्तम् । अयं नियमनिरपेक्षः सर्वोत्कृष्टः स्तवो नामकीर्तनमेवेत्यर्थो विस्पष्टं दर्शितः–'ध्यायन्कृते यजन्यज्ञैस्त्रेतायां द्वापरेऽर्चयन् । यदाप्नोति तदाप्नोति कलौ संकीर्त्य केशवम् ॥ इति विष्णुपुराणवचनम्' इति भाष्येण । भाष्यकाराणामस्य स्तवस्य नामकीर्तन-रूपत्वप्रतिपादनतात्पर्याभावेऽत्र विष्णुपुराणवचनोदाहरणस्यासांगत्यापत्ति-रनिवार्यैव । विष्णुपुराणषष्ठांशद्वितीयाध्यायगतात् 'ध्यायन्–' इति वचनात्प्राक्प्रवृत्तः कृत्स्नप्रथमाध्यायरूपो द्वितीयाध्यायैकदेशरूपश्च संदर्भः तद्वचनानन्तरं प्रवृत्तो द्वितीयाध्यायैकदेशरूपसंदर्भश्चेत्युभयोः संदर्भयोः 'ध्यायन्' इति वचनस्य च पर्यालोचनायां परमहंसादियतीनां गृहस्थानां सकलवर्णाश्रमाणां स्त्रीणामन्येषां च सकलप्राणिनां मतिपूर्वकं प्रकाशकृत-मन्त्रच्चेतीत्येतत्सकलपापनाशकः सकलाभ्युदयप्रदः सकलमुक्तिप्रदश्च सकृ-

नामकीर्तनरूपत्वमिति सिद्धम्। अत्र 'ध्यायन्-' इति वचने 'ध्यायन्'
इत्यनेनावगतं ध्यानं निदिध्यासनरूपं निर्गुणध्यानं सगुणध्यानं चेति
ध्यानत्वावच्छिन्नं सर्वं ध्यानं गृह्यते। कृतत्रेताद्वापरग्रहणेन सिद्धनिरतिशय-
ध्यानयजनार्चनैर्यावत्फलं तावत्फलं केशवस्य सकृन्नामकीर्तनेनैव स्यादिति
प्रतिपादनात्सकृत्कीर्तनस्य प्रत्येकं निरतिशयध्यानयजनार्चनेभ्य आधिक्यं
दर्शितम्। एवं निरतिशयनिदिध्यासनापेक्षया सकृन्नामकीर्तनस्यात्यन्ता-
धिक्यप्रतिपादनात्परमहंसयतिवरिष्ठेन सम्यक्कृतवेदान्तश्रवणमनननिदिध्या-
सनादिसकलधर्मेभ्यः सकृन्नामकीर्तनमत्यन्तोत्कृष्टमित्यर्थः सिद्ध एवेत्यत
एव सकृन्नामकीर्तनमप्रतिबद्धापरोक्षज्ञानजनकमित्यर्थः सिद्धः। अयमर्थो
विष्णुपुराणषष्ठांशे प्रथमाध्यायरूपे द्वितीयाध्याये च तात्पर्यग्राहकैः षड्वि-
धलिङ्गैरपि दृढीकृत इत्ययं सम्यग्विस्तरेणोपपादितो भगवन्नामामृतार्णवाख्य-
ग्रन्थे ग्रन्थविस्तरभियात्र न विस्तरेण दर्शितः।

'श्रुत्वा धर्मान्-' इति वैशम्पायनवाक्यरूपोपक्रमे तद्भाष्ये 'एष
मे सर्वधर्माणाम्-' इत्युपसंहारे तद्भाष्ये च पर्यालोचिते सकृत्स्तवशब्दोक्त-
सकृन्नामकीर्तने सकलधर्मफलहेतुत्वे सति नियमसामान्यानपेक्षत्वहेतुकस्य
सकलधर्मोत्कृष्टत्वस्य प्रतिपादनेन परमहंसयतिवरिष्ठैरनुष्ठितवेदान्तश्रवण-
मनननिदिध्यासनादिसकलधर्मेभ्योऽपि सकृन्नामकीर्तनस्योत्कृष्टतायाः सिद्ध-
त्वेन श्रवणमनननिदिध्यासनानीव सकृन्नामकीर्तनमप्रतिबद्धमपरोक्षमात्म-
ज्ञानं जनयत्येवेत्यर्थो निष्प्रत्यूहं सिद्धः। अत्र मूलेन भाष्येण च यस्तु
स्तवः सकृत्कृत एव कमपि नियममनपेक्ष्य सकलपापक्षयहेतुः सकलाभ्युदय-
हेतुः सालोक्यादिसकलमुक्तिहेतुर्ज्ञानद्वारा विदेहमुक्तिहेतुश्च स्यादिति प्रति-
पादितः, तस्य स्तवस्य नामकीर्तनरूपत्वं नामकीर्तनस्य विदेहमुक्त्यन्त-
सकलफलहेतुत्वं च सम्यगवगमितम्। पुनरप्यस्मिन्नेव भाष्ये सकृन्नाम-
कीर्तनस्य नियमसामान्यापेक्षारहितस्यैव सतः सकलपापक्षयाद्युक्तफलहेतुत्व-
प्रतिपादकस्य विष्णुपुराणसंदर्भस्य प्रदर्शनेन प्रकृतस्तवस्य नामकीर्तन-

रूपत्वं नामकीर्तनस्य विदेहमुक्त्यन्तसकलफलहेतुत्वं च दृढीकृतम् । पुनश्चास्मिन्नेव भाष्ये विश्वनामव्याख्यानानन्तरं विष्णुनाम्नो व्याख्यानात्प्राक्प्रवृत्तेऽस्मिन्भाष्यसंदर्भे सकृन्नामकीर्तनमेव कमपि नियममनपेक्ष्य सकलपापक्षयहेतुः सकलाभ्युदयहेतुर्विदेहकैवल्यहेतुश्च स्यादित्यर्थप्रतिपादकवचनानामुदाहरणेन प्रकृतस्तवस्य नामकीर्तनरूपत्वं नामकीर्तनस्य विदेहकैवल्यान्तसकलफलहेतुत्वं च स्थूणानिखननन्यायेन दृढीकृतम् । सोऽयं भाष्यसंदर्भः 'अवशेनापि यन्नाम्नि कीर्तिते सर्वपातकैः । पुमान्विमुच्यते सद्यः सिंहत्रस्तैर्मृगैरिव ॥ यन्नामकीर्तनं भक्त्या विलापनमनुत्तमम् । मैत्रेयाशेषपापानां धातूनामिव पावकः ॥ कलिकल्मषमत्युग्रं नरकार्तिप्रदं नृणाम् । प्रयाति विलयं सद्यः सकृद्यस्य च संस्मृतेः ॥ ज्ञानतोऽज्ञानतो वापि वासुदेवस्य कीर्तनात् । तत्पापं विलयं याति तोयस्थलवणं यथा ॥ सकृत्स्मृतोऽपि गोविन्दो नृणां जन्मशतार्जितम् । पापराशिं दहत्याशु तूलराशिमिवानलः ॥ सकृदुच्चरितं येन हरिरित्यक्षरद्वयम् । बद्धः परिकरस्तेन मोक्षाय गमनं प्रति ॥ एकोऽपि कृष्णस्य कृतः प्रणामो दशाश्वमेधावभृथेन तुल्यः । दशाश्वमेधी पुनरेति जन्म कृष्णप्रणामो न पुनर्भवाय ॥ मा ऋचो मा यजुस्तात मा साम पठ किंचन । गोविन्देति हरेर्नाम गेयं गायस्व नित्यशः ॥ नारायणेति शब्दोऽस्ति वागस्ति वशवर्तिनी । तथापि नरके घोरे पतन्तीत्येतदद्भुतम् ॥ नरके पच्यमानस्तु यमेन परिभाषितः । किं त्वया नार्चितो देवः केशवः क्लेशनाशनः ॥ कमलनयन वासुदेव विष्णो धरणिधराच्युत शङ्खचक्रपाणे । भव शरणमितीरयन्ति ये वै त्यज भट दूरतरेण तानपापान् ॥ गोकोटिदानं ग्रहणेषु काशीप्रयागगङ्गायुतकल्पवासः । यज्ञायुतं मेरुसुवर्णदानं गोविन्दकीर्त्तेर्न समं शतांशे ॥ हत्यायुतं पानसहस्रमुग्रं गुर्वङ्गनाकोटिनिषेवणं च । स्तेयान्यसंख्यानि हरेः प्रियेण गोविन्दनाम्ना निहतानि सद्यः ॥ कृष्णानुस्मरणादेव पापसंघातपञ्जरम् । शतधा भेदमायाति गिरिर्वज्रहतो यथा ॥' इत्यादिवचनैः श्रद्धाभक्त्योरभावेऽपि नामसंकीर्तनं सकलदुरितं

पुराणवचनोदाहरणेन नामकीर्तनस्य ध्यानयजनार्चनफलहेतुत्वप्रदर्शनेन चात्र 'कलिकल्मषमत्युग्रम्—' इति वचनेन 'सकृत्स्मृतोऽपि गोविन्दः—' इति वचनेन च स्मरणस्योक्तं सकलपापक्षयहेतुत्वं, कीर्तनस्याप्युक्तमेव स्मरणस्य कीर्तनेऽन्तर्भूतत्वात् । एवम् 'नरके पच्यमानस्तु—' इति वचनेनार्चनस्योक्तं कीर्तनस्योक्तमेव । 'एकोऽपि कृष्णस्य कृतः प्रणामः—' इति वचनेन नमस्काररूपार्चनस्योक्तं फलं च कीर्तनस्योक्तमेव । नमस्कारस्य कीर्तनान्तर्भूतत्वात् ।

'यस्मिन्न्यस्तमतिः' इत्युदाहृतविष्णुपुराणवचनस्यार्थो विस्तरेण दर्शितो नामामृतार्णवे ग्रन्थविस्तरभियात्र संग्रहेण प्रदर्श्यते— अत्र न्यस्तमतिरित्युक्तोऽच्युते मतिन्यासो धारणाय । यच्चिन्तने इत्युक्ताच्युतचिन्तनं ध्यानम् । निवेशितात्ममनस इत्युक्तोऽच्युते मनोनिवेशः समाधिः । चेतसि यः स्थित इत्युक्तमच्युतस्य चेतस्यवस्थानं साक्षात्कारः । तथा च यस्मिन्न्यस्तमतिः नरस्य कं सार्वभौमसुखं न प्राप्नोति, तत्सुखं तद्धारणाया अननुरूपं फलम्, मुक्तिरेव तस्या अनुरूपं फलमिति भावः । यत्राच्युते निवेशितात्ममनसो ब्राह्मोऽपि लोकोऽल्पकः मुक्तिरेव फलम् । पुंसां चेतसि यः स्थितोऽव्ययो मुक्तिमेव ददाति । एवं यदच्युतविषयकधारणादिचतुर्णां नियमेन मुक्तिरेव फलं तस्मिन्नच्युते कीर्तिते सकलमघं विलयं प्रयातीति यत्, तत्किं चित्रं किमाश्चर्यम् । धारणाध्यानसमाधिसाक्षात्कारेभ्य उत्कृष्टस्य नामकीर्तनस्य सकलाघविलयनहेतुत्वं किमाश्चर्यमिति भावः । इदं च कीर्तनस्य यदाधिक्यम् 'श्रुत्वा धर्मानशेषेण—' इति परमोपक्रमे 'को धर्मः सर्वधर्माणाम्—' इति प्रश्नवचने '—गुह्यं पवित्रमिदमुत्तमम् । प्रत्यक्षावगमं धर्म्यं सुसुखं कर्तुमव्ययम् । अश्रद्दधानाः पुरुषा धर्मस्यास्य परंतप ॥' इति भगवद्गीतानवमाध्यायसंदर्भे च विस्पष्टम् । एवं नामकीर्तनस्य धारणादिचतुर्भ्य आधिक्यबोधकस्य 'यस्मिन्न्यस्त—' इति वचनस्यार्थ-

वादत्वशङ्कावारणायोक्तमिति श्रीमता पराशरेणोपसंहृतमिति । विष्णुपुराण-षष्ठांशान्तिमाध्याये 'अवशेनापि यन्नाम्नि कीर्तिते' इत्युपक्रम्य 'यस्मिन्न्यस्तमतिः–' इत्युपसंहृतत्वेन नार्थवादत्वमिति भावः। अत्र धारणादिधर्म-चतुष्टयान्नामकीर्तनस्याधिक्यप्रतिपादनेन कीर्तनस्य सर्वधर्माधिक्यं दर्शित-मेव। एतद्धर्मचतुष्टयस्य सर्वधर्मेभ्योऽधिकत्वात्। 'यस्मिन्न्यस्त –' इत्यस्मिन्वचने नामकीर्तनस्य दर्शितध्यानाद्यपेक्षयाधिक्यं सर्वधर्माधिक्यमेव ध्यानस्यैव सर्वधर्माधिकत्वेन ध्यानादधिकनामकीर्तनस्य सर्वधर्माधिकतायाः कैमुतिकन्यायसिद्धत्वादित्यभिप्रेत्य ध्यानस्य सर्वधर्माधिक्यं दर्शितमुत्तर-भाष्ये भारतहरिवंशवचनयोरुदाहरणेन । अत्र भारतवचनस्यायं भावः– सकलधर्मप्रतिपादकसकलशास्त्राणां पुनः पुनर्विचारेण सगुणनिर्गुणरूपध्यान-मेकमेव सुनिष्पन्नमित्याभिधानस्य सकलधर्माधिकतायाः सगुणनिर्गुणध्यानमेकं सुनिष्पन्नमित्यर्थं विनार्थान्तरस्यात्यन्तायुक्तत्वेन ध्यानस्य सर्वधर्माधिकतायाः सिद्धत्वात्, ध्यानत्वावच्छिन्नध्यानस्य सगुणध्यानत्वमेवेति संकोचकल्पने मानाभावादिति ।

श्रीव्यासेनोपसंहृतम् इति भाष्यस्यायं भावः– भारते नारायणध्यान-मुपक्रम्य पुण्डरीकनारदसंवादरूपेण महता संदर्भेणोपपाद्य 'आलोड्य–' इति वाक्ये ध्यानस्योपसंहृतत्वेनास्य वाक्यस्य स्वार्थपरताया अनिवार्यत्वेन नार्थवादत्वमिति । हरिवंशवचनेऽपि 'हरिरेकः सदा ध्येयः' इत्युक्ते हरिध्यानस्य सर्वधर्मोत्कृष्टत्वं सिद्धमेव । "हरिरेकः सदा ध्येयः इत्युक्तं महेश्वरेणापि' इति भाष्यस्यायं भावः–विधिप्रत्यययुक्तस्य महेश्वरवाक्य-स्यास्य विधायकत्वमेव नार्थवादत्वमिति । अत्र कीर्तनस्य दर्शितं मूलाविद्या-विनिवारकज्ञानादाधिक्यं सकृत्कीर्तनस्यैव 'तत्राच्युते कीर्तिते' इत्युक्ते झटिति सकृत्कीर्तनस्यैवावगमात्, अत्र भाष्ये 'यस्मिन्न्यस्त–' इति वचनोदाहरणात्प्राग्ज्ञानद्वारा मुक्तिप्राप्तिप्रतिपादकस्य 'सकृदुच्चरितं येन–'

इति वचनस्य दर्शितत्वाच्च । तद्वचने 'बद्धः परिकरस्तेन मोक्षाय गमनं प्रति ' इत्यनेनोक्तः परिकरबन्धस्तु मूलाविद्यानिवर्तकज्ञानसंपादनमेव, तत्परिकरबन्धानन्तरमेव मुक्तिप्राप्तिप्रतिपादनात् । अतः सिद्धमेव सकृत्कीर्तनस्य ज्ञानादुत्कृष्टत्वं भाष्याभिमतमेवेति ।

ननु ज्ञानादाधिक्यं कीर्तनस्यायुक्तमेव ज्ञानं विना कीर्तनस्य मुक्तिहेतुत्वासंभवात् प्रत्युत ज्ञानस्य नामकीर्तनादाधिक्यमेवोचितम्, ज्ञानस्य साक्षान्मुक्तिहेतुत्वादिति चेत्; सत्यं ज्ञानं विना कीर्तनस्य मुक्तिहेतुत्वं नास्त्येव ; तथाप्यत्र दर्शितं कीर्तनस्य ज्ञानाधिक्यं युक्तमेव, कीर्तने ज्ञानादाधिक्यं ज्ञानस्य कीर्तनाधीनत्वमेवेत्यङ्गीकारात्, लोके यद्वस्तुनो यत्पदार्थाधीनत्वं तद्वस्त्वपेक्षया तत्पदार्थेऽधिकताया दृष्टत्वात् वैद्यशास्त्रार्थज्ञानसामान्याभावेन रोगनिवर्तनसामर्थ्यरहिते मण्डलेश्वरे महाराजे तन्महाराजाधीनजीवनाद्वैद्यशास्त्रनैपुण्यजन्येन सकलरुङ्निवर्तनकौशलेन तन्महाराजस्याशक्यकार्यकरणसमर्थाद्वैद्यश्रेष्ठात्तन्महाराजस्योत्कृष्टतया दृष्टत्वेन नामकीर्तने शास्त्रेण दर्शितस्य ज्ञानादुत्कृष्टत्वस्योपपन्नताया अनिवार्यत्वात् । अतः सिद्धमेव सकृन्नामकीर्तने ज्ञानादाधिक्यम् ।

विहितं च सकृत्कीर्तनमप्रतिबद्धापरोक्षज्ञानसाधनत्वेन ऋग्वेदे 'आस्य जानन्तो नाम चिद्विवक्तन महस्ते विष्णो सुमतिं भजामहे ' इति संदर्भेण । अस्याः श्रुतेरर्थः श्रीधरवेंकटेश्वरशास्त्रिभिर्भगवन्नामभूषणे विस्तरेणोक्तः । ग्रन्थविस्तृतत्वभियात्र संग्रहेणोच्यते—तच्छ्रुतौ जानन्तः अप्रतिबद्धापरोक्षज्ञानार्थिनः अस्य विष्णोः नाम चित् नामैव आ विवक्तन ईषत्कीर्तयत । सकृत्कीर्तयतेति भावः । अप्रतिबद्धापरोक्षात्मज्ञानोद्देशेन सकृन्नामकीर्तनमत्र विहितम्, 'श्येनेनाभिचरन्यजेत ' इतिवदस्य वाक्यार्थस्योपपन्नत्वात् । अत्र विधेयविशेषणसमर्पक ईषदर्थको वाभिव्याप्त्यर्थको

वेति संशयवारणद्वारात्रोद्देश्यत्वेनावगतं ज्ञानं मूलाविद्याविनिवारकमप्रति-बद्धापरोक्षज्ञानमेवेत्यर्थं दृढीकरोति 'महस्ते-' इत्यादि वाक्यशेषः । अत्र 'भजामहे' इति लड्वर्तमानसमीपार्थकः । 'इति निश्चयवन्तः' इति पदद्वयमध्याहर्तव्यम् । हे विष्णो महः त्रिविधपरिच्छेदरहितस्य ते तव सुमतिं शोभनां मतिम् अप्रतिबद्धापरोक्षात्मज्ञानं भजामहे प्राप्नुमः इति निश्चयवन्तः आ विवक्तनेत्यन्वयः । अयमर्थः—भगवन्नामकीर्तने कृते ज्ञानं कालान्तरे प्राप्स्याम इति न मन्ध्वम्, किं तु कीर्तनस्य वर्तमानकालसमीप-काल एव कीर्तनसमनन्तरकाल एव ज्ञानं प्राप्नुमः सकृत्कीर्तनेनैव मूलाविद्या-विनिवर्तकज्ञानं प्राप्नुम इति निश्चियवन्तः सन्तः कीर्तयतेति सकृत्कीर्तने-नैवाप्रतिबद्धापरोक्षात्मज्ञानं जायत इति भावः । एवमत्र वाक्यशेषे सकृत्कीर्तनस्यैवाप्रतिबद्धापरोक्षात्मज्ञानसाधनत्वप्रतिपादनेन दर्शितः संशयो निवर्तितः तज्ज्ञानं च दृढीकृतमित्यर्थः सिद्धः । एतदृग्वेदवाक्यस्येव 'आस्य जानन्तो नाम चिद्विवक्तन बृहत्ते विष्णो सुमतिं भजामहे' इति यजुर्वेद-वाक्यस्याप्यर्थो वाच्यः । उभयोर्वाक्ययोः शब्दैक्यस्य दर्शनात् । अत्र 'बृहत्' इति लुप्तषष्ठीकं पदम् । बृहत इत्यर्थः । 'एवम्'—राज्यार्हाणां महीभृताम् । धर्ममार्गं चरित्रेण ज्ञानमार्गं च नामतः । स्वस्य ध्यानेन वैराग्य-मैश्वर्यं स्वस्य पूजनात् । रामो रात्यस्य रामाख्या भुवि स्यात्' इति राम-तापन्याख्याथर्वणवेदोपनिषत्संदर्भे तु सकृन्नामस्मरणस्य सकृन्नामकीर्तनस्य सकृन्नामश्रवणस्य चाप्रतिबद्धापरोक्षज्ञानसाधनत्वं दर्शितम् । तथा हि—ज्ञान-रूपमार्गं येन ज्ञानेनावश्यं मुक्तिं प्राप्नोति तदप्रतिबद्धापरोक्षमात्मज्ञानं राति ददाति नामतः । पञ्चम्या हेत्वर्थे तसिः । तथा च तज्ज्ञाने रामस्य नाम हेतुरित्यर्थः । नाम्नो हेतुत्वोक्त्या नामस्मरणस्य नामकीर्तनस्य नाम-श्रवणस्य वा ज्ञानहेतुत्वं स्यात् । तेन च सकृन्नामस्मरणं वा सकृन्नामकीर्तनं वा सकृन्नामश्रवणं वा अप्रतिबद्धापरोक्षज्ञानसाधनत्वेन विहितमित्यर्थः । अस्याः श्रुतेरर्थो विस्तरेण दर्शितो नामामृतार्णवे । ग्रन्थविस्तृतत्वभियात्र

संग्रहेण दर्शितः । तथा च ऋग्वेदे यजुर्वेदे आथर्वणवेदे चाप्रतिबद्धापरोक्षात्मज्ञानोद्देशेन सकृन्नामकीर्तनं गतिसामान्येन विहितमित्ययमर्थः स्थूणानिखननन्यायेन दृढीकृतः, ब्रह्ममीमांसायामीक्षत्यधिकरणे 'गतिसामान्यात्' इति गुणसूत्रभाष्ये; 'महच्च प्रामाण्यकारणमेतद्यत्प्रमाणानां गतिसामान्यम्' इत्यर्थस्य प्रतिपादितत्वात् । अत्र भाष्येऽनुपददर्शितम् 'सकृदुच्चरितं येन हरिरित्यक्षरद्वयम्' इति वचनमासां श्रुतीनामुपबृंहणं स्यात् । एतज्जातीयानि पुराणवचनानि बहून्युदाहर्तुं शक्यानि ग्रन्थविस्तृतत्वभिया नात्र दर्शितानि । मन्त्राणां विधायकत्वमङ्गीकृतं धर्ममीमांसावार्त्तिककारैः—'विधिशक्तिर्न मन्त्राणां नियोगेनापनीयते । स्वतो विधास्यति ह्येष नियोगात्स्मारयिष्यति' इति वार्त्तिकेन । अत्र वैशम्पायनवाक्यरूपोपक्रमादीषत्तत्स्वारसिकार्थनिर्णयप्रस्तावे सकृत्कीर्तनं ज्ञानद्वारा मुक्तिसाधनमिति निर्णीतत्वेन तत्संदर्भः । तथा विष्णुपुराणषष्ठांशान्तिमाध्याये 'यस्मिन्न्यस्तमतिः', इत्यादिसंदर्भे सकृन्नामकीर्तनमप्रतिबद्धापरोक्षज्ञानसाधनमिति प्रतिपादितत्वेन, तत्संदर्भश्चासां श्रुतीनामुपबृंहणं स्यादेव । 'यन्नामसकृच्छ्रवणात्पुल्कसोऽपि विमुच्यते संसारात्' इति सिद्धान्तसिद्धाञ्जनकर्तृभिः श्रीबालकृष्णानन्दचरणैः पुरुषार्थरत्नाकरे नामतरङ्गे दर्शितश्रुतौ तु सकृन्नामश्रवणस्य मुक्तिहेतुत्वं कण्ठरवेणोक्तमिति ज्ञानं विना मुक्त्यसंभवेन तस्यां श्रुतौ ज्ञानद्वारा मुक्त्युद्देशेन भगवन्नाम्नः सकृच्छ्रवणं विधीयते । अतोऽत्र भाष्ये दर्शितवचनैरयमर्थः सिद्ध एव । नियमं कमप्यनपेक्ष्य सकृन्नामकीर्तनमेव सकलपापनिवर्तकं सकलाभ्युदयसाधनं मुक्तिसाधनं चेत्येतत्सर्वमभिप्रेत्य 'एष मे सर्वधर्माणामित्याधिक्यमुक्तम्' इति भाष्यस्यायमर्थः । अत्र भाष्ये दर्शितवचनैरन्यैश्च भगवन्नाम्नां यद्यन्माहात्म्यमुक्तं तत्सर्वं तथ्यमेव न गुणवादरूपमित्यभिप्रेत्य 'एष मे सर्वधर्माणाम्—' इति नामकीर्तनस्य सर्वधर्माधिक्यमुक्तमिति । भारते तु 'श्रुत्वा धर्मान्—' इति वैशम्पायनवाक्येन 'को धर्मः सर्वधर्माणाम्' इत्यादिप्रश्नोत्तररूपसंदर्भेण च भगवन्नाममु

दर्शितमाहात्म्यापेक्षयाधिकमाहात्म्यस्य श्रुतिपुराणेतिहासादिषु क्वापि वक्तु-मशक्यत्वादिति भावः । अन्यथात्र वक्तव्यस्य वैशम्पायनवाक्यमारभ्य ' एष मे सर्वधर्माणाम् – ' इति भीष्मवचनवाक्यान्तमूलार्थस्य सर्वस्यापि प्रागेवोक्तत्वेन पुनरपि मूलार्थस्यात्र भाष्येऽभिधानाभावेन बहूनि नामकीर्तन-माहात्म्याभिधायकवचनान्युदाहृत्य एतत्सर्वमभिप्रेत्य ' एष मे सर्व-धर्माणाम् ' इत्याधिक्यमुक्तमिति भाष्योक्तेर्वैयर्थ्यापत्तेः । एवं नामकीर्तनस्य पुराणेतिहासादिषु कमपि नियममनपेक्ष्यैव सकलपापक्षयहेतुत्वस्य सकलाभ्यु-दयहेतुत्वस्य मुक्तिहेतुत्वस्य चाभिधायकवचनानां स्वार्थपरत्वं प्रदर्श्य इममर्थं पुनः पुनरभिधानेन दृढीकर्तुमस्मिन्नेव सहस्रनामभाष्येऽग्रिमसंदर्भे पञ्चसु स्थलेषु नामकीर्तनमाहाम्यप्रतिपादकवचनानि बहूनि दर्शितानि ।

अत्र ' पवित्राणां पवित्रं यो मङ्गलानां च मङ्गलम् ' इति वाक्ये ' पवित्राणां पवित्रम् ' इत्यस्य व्याख्यानरूपभाष्ये प्रथमप्रश्नोत्तरमाह– पवित्राणां पवित्रं पावनानां तीर्थादीनां पावनम्, परमस्तु पुमान्ध्यातो दृष्टः कीर्तितः श्रुतः पूजितः स्मृतः प्रणतः सर्वान्पाप्मन उन्मलयतीति पवित्राणां पवित्रमित्युक्त्वा तत्र प्रमाणत्वेन बहूनि पुराणादिवच-न्युदाहृतानि । तेन नामकीर्तनस्य सकलपापक्षयहेतुत्वं दृढीकृतम् । एवं नारायणनामव्याख्यान-रूपभाष्ये च ' नारायणेति शब्दोऽस्ति वागस्ति वशवर्तिनी । तथापि नरके घोरे पतन्तीत्येतदद्भुतम् ॥ ' इति वचनमुदाहृतम् । तेन नामकीर्तनस्य सकलपापक्षयहेतुत्वं दृढीकृतम् । एवम् ' सुव्रतः ' इति नाम्नो व्याख्यान-रूपे सुव्रत इति शोभनं व्रतमस्येति सुव्रतः श्रीरामायणे इति भाष्ये सकृन्नाम-कीर्तनस्य सर्वाभयप्रदानहेतुत्वं दर्शितम् । अस्य वचनस्यार्थो नामामृतार्णवे विस्तरेण दर्शितः । एवम् ' क्षितीशः पापनाशनः ' इत्यत्र पापनाशननाम-व्याख्यानरूपे भाष्ये ' कीर्तितः पूजितो ध्यातः स्मृतः पापराशिं विनाशय-तीति पापनाशनः इत्युक्त्वा तत्र प्रमाणत्वेन पुराणवचनमुदाहृतम् । तेन

नामकीर्तनस्य पापराशिविनाशकत्वं दृढीकृतम् । एवं सहस्रनामभाष्यान्ते प्रवृत्तभाष्ये एकैकनामस्तवनस्यापि विशेषफलसाधनत्वं सकलफलसाधनत्वं च प्रतिपादयन् श्रीविष्णुधर्माध्यायस्यैकदेशोऽत्र श्रीविष्णुनामसहस्रव्याख्याने पठ्यते इत्यादिकमुक्त्वा नामकीर्तने सकलपुरुषार्थसाधनत्वविधायकानि सकलपापक्षयसाधनत्वविधायकानि च विष्णुधर्मवचनानि बहूनि दर्शितानि । तेनास्मिन्सहस्रनामभाष्येऽभिहितं भगवन्नामकीर्तनस्य सकलपापक्षयहेतुत्वं सकलपुरुषार्थहेतुत्वं च स्थूणानिखननन्यायेन दृढीकृतमिति सर्वं सुस्थम् । अत्र भाष्ये दर्शितवचनानामर्थः सर्वोऽपि सम्यग्दर्शितो भगवन्नामामृतार्णवे ।

नन्वत्र सकृन्नामकीर्तनस्यैव सकलफलसाधनत्वमप्रतिबद्धापरोक्षज्ञानसाधनत्वं चोक्तं तदनुपपन्नमेव, सकृन्नामकीर्तनेनात्र पशुपुत्रवित्तादिरूपफलस्य वा अप्रतिबद्धापरोक्षात्मज्ञानस्य वादर्शनात् केषांचिदभवदिति पुराणादिभ्योऽश्रवणाच्चेति चेत् ; उच्यते—प्रतिबन्धकाभावे दृश्यत एव सकलमपि प्रयोजनम् । रागादिभिरत्यन्ताक्रान्तचित्तस्यात्यन्तदुराचारिणोऽजामिलस्य पुत्रोपचरितेन सकृन्नामकीर्तनेन विषयेषु दृढवैराग्यदुर्वासनाराहित्यं दृढध्याननामकीर्तनादिरूपं भगवद्भजनं च जातमित्युक्तं भागवते षष्ठस्कन्धे । तस्याजामिलस्य तदेव सकृत्कीर्तनं क्रममुक्तिप्रदं चाभवदित्यर्थोऽपि दर्शितः । तत्रैव 'अयं हि कृतनिर्वेशो जन्मकोट्यंहसामपि । यद्व्याजहार विवशो नाम स्वस्त्ययनं हरेः ॥' इति यमदूतान्प्रति श्रीविष्णुपार्षदानां वचनेन 'एतावतालमघनिर्हरणाय पुंसां संकीर्तनं भगवतो गुणकर्मनाम्नाम् । आक्रुश्य पुत्रमघवान्यदजामिलोऽपि नारायणेति म्रियमाण उपैति मुक्तिम् ॥' इति स्वदूतान्प्रति यमवाक्येन च । स्कान्दपुराणे तु भागवतेऽभिहितादजामिलादन्यस्य चण्डालस्त्रिया उदरात्स्वस्माज्जातायां स्वपुत्र्यां दश पुत्रानुत्पादितवतोऽत्यन्तदुराचारिणोऽप्यजामिलस्य पुत्रोपचरितेनैव नारायणेति सकृन्नामकीर्तनेन श्रीविष्णुपार्षदैर्हैमविमाने समारोपितस्यात्म-

ज्ञानेन सायुज्यप्राप्तिर्जातेत्यर्थः कण्ठरवेणोक्तः ‘ इत्युक्त्वा भगवद्भक्ति-मालम्ब्यात्मानमात्मनि । ततः सायुज्यपदवीं लेभे तन्नामकीर्तनात् ॥ ’ इति संदर्भेण । अस्यायमर्थः—मया बहूनि पापानि कृतानि पुत्रोपचरितेनापि भगवन्नामकीर्तनेन तीर्णोऽस्मीत्यर्थमुक्त्वा तन्नामकीर्तनात् भगवन्नामकीर्तनात् भगवद्भक्तिमालम्ब्य भगवति प्रेमरूपभक्तिं प्राप्य, तया भक्त्या शुद्धचित्तः सन्निति भावः, आत्मनि परमात्मनि आत्मानं जीवात्मानमेकीभूतं विज्ञाय ततः तदात्मज्ञानात् सायुज्यपदवीं लेभे इति । एवं सकृन्नामकीर्तनेन बहूनां नानाविधफलानि जातानीति पुराणेतिहासादिषु बहुधोक्तम् । तत्सर्वमत्र ग्रन्थविस्तृतत्वभिया नोदाहृतमिति नोक्तदोषस्यावकाशः ।

नामकीर्तनफलप्रतिबन्धकं च केषांचित्प्रारब्धरूपं केषांचिन्नामापराधरूपं केषांचिदुभयं च । नामापराधदशकं तन्नाशकत्वेनाविरतकीर्तनं चोक्तं पाद्मपुराणसंदर्भे । स च संदर्भः ‘ ध्रुवासो अस्य कीरयो जनास उरु क्षितिं सुजनिमा चकार ’, ‘ प्र तत्ते अद्य शिपिविष्ट नामार्यः शंसामि वयुनानि विद्वान् ’ इति ऋग्वेदमन्त्रसंदर्भस्य ‘ प्र तत्ते अद्य शिपिविष्ट नामार्यः शंसामि वयुनानि विद्वान् ’ इति यजुर्वेदमन्त्रसंदर्भस्य चोपबृंहणतया प्रवृत्तः । अनयोः श्रुत्योरर्थः श्रीभगवेङ्कटेश्वरशास्त्रिभिर्भगवन्नामभूषणे विस्तरेणोक्तो ग्रन्थविस्तृतत्वभियात्र संग्रहेण प्रदर्श्यते—प्रसिद्धो विष्णुः सुजनिमा सन् वामनरूपेणावतीर्णः सन् क्षितिम् उरु विस्तीर्णां चकार असुराक्रान्तां भूमिं मनुष्याणां विस्तीर्णां कृतवानिति भावः । अस्य एतादृशस्य विष्णोः कीरयः नामकीर्तनकर्तारः जनासः स्त्रीपुंनपुंसकात्मकाः सर्वे जनाः ध्रुवासः ध्रुवा भवन्ति निर्विशेषमुक्तिं प्राप्नुवन्ति, हे शिपिविष्ट हे विष्णो तत् मुक्तिसाधनीभूतस्तुतिरूपकीर्तनकर्मभूतं ते तव नाम अद्य प्रशंसामीत्युक्त्या नामव्यतिरिक्तकर्मकप्रशंसायाः प्रतीत्यभावेन नामव्यतिरिक्तं सर्वमपहाय नाममात्रं नाम्ना स्तुतिमात्रं नामकीर्तनमात्रम् अर्यः स्वामी नामकीर्तनसाध्य-

फलस्य, तत्फलकाम इत्यर्थः, अद्य प्रशंसामि नामकीर्तने प्रकृष्टप्रवृत्त्यर्थमिति भावः। शंसनस्य स्तुतेः प्रवृत्तिहेतुतायाः सिद्धत्वेन प्रशंसायाः प्रकृष्टप्रवृत्तिहेतुतया वक्तव्यत्वात् अन्यथा प्रशब्दस्य वैयर्थ्यापत्तेः। किं सर्वाणि मुक्तिसाधनान्यजानन्मुक्तिसाधनीभूतनामकीर्तनं प्रशंससि अथवा जानन्नित्याकाङ्क्षायामुक्तं वयुनानि विद्वानिति। वयुनानि धर्मात्मकानि ज्ञानात्मकानि च सकलमुक्तिसाधनानि विद्वान् जानन्नेव तानि मुक्तिसाधनानि सर्वाण्यपहाय नामकीर्तने प्रकृष्टतया प्रवर्तमानः प्रशंसामीत्यर्थः। अत्र तन्नामेति नामविशेषणीभूततच्छब्देन 'ध्रुवासो अस्य कीरयः' इति पूर्ववाक्योक्तमुक्तिसाधनीभूतस्तुतिकर्मपरामर्शात्तत्रोक्तमुक्तिसाधनीभूतस्तुतिकर्म नामैवेति अत एव सा स्तुतिः स्तुतित्वावच्छिन्ननामकीर्तनरूपैवेति च 'छागो वा मन्त्रवर्णात्' इत्यत्रोक्तच्छागपशुन्यायेन निर्धारितम्। अत एव 'प्र तत्ते--' इति मन्त्रे 'नाम' इत्यस्य मुक्तिसाधनीभूतनामकीर्तनमित्यर्थः सिद्धः। 'ध्रुवासः--' इति वाक्ये मुक्तिसाधनत्वेन दर्शितनामकीर्तनस्यैवात्र नामविशेषणीभूततच्छब्देन परामृष्टत्वात् उपक्रमानुसाराच्च। तथा च नामकीर्तनव्यतिरिक्तमुक्ति साधनानि सर्वाणि जानन्नाम प्रशंसामीत्युक्त्या नामकीर्तनव्यतिरिक्तानि मुक्तिसाधनानि सर्वाणि दोषवत्त्वेन जानन् तानि परित्यज्य नाम प्रशंसामीत्यर्थः सिद्धः। तथा हि-- नाम प्रशंसामीत्युक्त्या नामव्यतिरिक्तसाधनान्यपि प्रशंसामीत्यर्थस्य प्रसक्त्यभावेन नामव्यतिरिक्तसाधनानां परित्यागं विना नाममात्रप्रशंसाया अनुपपन्नत्वेन नामव्यतिरिक्तसाधनान्यपहाय नाम प्रशंसामीत्यर्थोऽवश्यमङ्गीकार्य इत्यनेन च नामव्यतिरिक्तसाधनानि सर्वाणि सम्यग्जानन् तानि विहाय नाम प्रशंसामीत्यर्थः सिद्धः। तथा च तेषां साधनानां परिज्ञानपूर्वकं कृतः परित्यागस्तेषु तेषु दोषं विनानुपपन्न इति तेषु दोषस्तद्दोषहेतुश्चावश्यं कल्पनीय इत्यर्थस्य तथा नामप्रशंसा नाम्नि प्रकृष्टप्रवृत्त्यर्थमेवेत्यर्थस्य दर्शितत्वेन नाम्नि प्रकृष्टप्रवृत्त्यर्थं नाम्नि प्रकृष्टगुणस्तद्गुणहेतुश्च कल्पनीय इत्यर्थस्य च

सिद्धत्वेन तेषु स दोषस्तद्दोषहेतुश्च क इति नाम्नि स च प्रकृष्टगुणस्तद्गुण-हेतुश्च क इति चाकाङ्क्षायाः सिद्धत्वेन श्रीमहाभारते ' श्रुत्वा धर्मान्— ' इति वैशम्पायनवाक्यरूपेण ' को धर्मः सर्वधर्माणाम् ' इत्यादिप्रश्नोत्तर-रूपेण च संदर्भेण तद्भाष्येण च नामकीर्तनव्यतिरिक्तसाधनेषु दुःखसंपाद्यत्व-रूपदोषो बह्वङ्गसापेक्षत्वरूपतद्धेतुश्च ( दर्शित इति तद्रीत्यात्रापि नाम-कीर्तनव्यतिरिक्तमुक्तिसाधनेषु सर्वेषु दुःखसंपाद्यत्वरूपदोषो बह्वङ्गसापेक्षत्व-रूपतद्धेतुश्च ) तथा नामकीर्तने सुखसंपाद्यत्वरूपप्रकृष्टगुणः अङ्गसामान्य-निरपेक्षत्वरूपतद्धेतुश्च उक्ताकाङ्क्षापूरणायावश्यं कल्पनीयः । अतस्तद्भारत-संदर्भोऽस्याः श्रुतेरुपबृंहणं स्यादेव । नामकीर्तनकर्मकप्रवृत्तेः प्रकृष्टत्वं च नैरन्तर्यमेव । अद्यैव सर्वं विहाय नामकीर्तने प्रकृष्टतया प्रवर्तितव्यमित्यर्थ-प्रदर्शनेन तत्प्रवृत्तौ निरन्तरप्रवृत्तिरूपताया विस्पष्टत्वात् । तथा चाद्यैव नामव्यतिरिक्तानि मुक्तिसाधनानि सर्वाण्यपहाय निरन्तरनामकीर्तने प्रवर्तित इति पर्यवसन्नोऽर्थः । एतदृग्वेदे ' प्र तत्ते अद्य शिपिविष्ट— ' इति मन्त्रस्यैव यजुर्वेदे ' प्र तत्ते अद्य शिपिविष्ट— ' इति दर्शितमन्त्रस्या-प्ययर्थोऽवश्यं वाच्यः उभयत्र प्रकरणस्य समानत्वात् । ऋग्वेदे पठितस्ये-वास्य मन्त्रस्यैकवर्णस्यापि व्यत्ययराहिततया अन्यूनाधिकतया च यजुर्वेदे पठितत्वात् बाधकाभावाच्च । अतः सिद्धमृग्वेदयजुर्वेदयोः स्थितस्य 'प्र तत्ते अद्य– ' इति मन्त्रस्यैक एवार्थ इति । तथा चास्मिन्नृग्वेदे यजुर्वेदे च स्थलान्तरे ' आस्य जानन्तः— ' इति मन्त्रे अप्रतिबद्धापरोक्षज्ञान-मुद्दिश्य सकृन्नामकीर्तनस्य विहितत्वेऽपि बहुभिः कृतसकृन्नामकीर्तनफलस्य प्रतिबन्धकसद्भावं सिद्धवत्कृत्य तत्प्रतिबन्धकनिरासायैवेदं निरन्तरनाम-कीर्तनमाभ्यां श्रुतिभ्यां दर्शितमित्यर्थः सिद्धः । अन्यथा सकृन्नामकीर्तन-निरन्तरनामकीर्तनप्रतिपादकश्रुतीनां विरोधापत्तेः ।

यथा च मोक्षेच्छूनां निरन्तरनामकीर्तनप्रतिपादकश्रुतिभ्यां सकृन्नामकीर्तनफले प्रतिबन्धकं बहूनामस्तीत्यर्थः प्रदर्शित इति तत्प्रतिबन्धकं किमित्याकाङ्क्षानयोः श्रुत्योरस्त्येवेति तदकाङ्क्षापूरको दशनामापराधाभिधायकः तद्दशापराधनाशायाविश्रान्तनामकीर्तनाभिधायकश्च पाद्मपुराणसंदर्भः स्यादेव, तत्संदर्भस्य तदाकाङ्क्षापूरणसमर्थत्वात् । तस्मिन्नामापराधाभिधायकपाद्मपुराणसंदर्भे कानिचिद्वचनान्यत्र प्रदर्श्यन्ते । तत्र 'नामाश्रयः कदाचित्स्यात्तरत्येव स नामतः । नाम्नोऽपि सर्वसुहृद अपराधात्पतत्यधः॥' इति श्रीनारदं प्रति श्रीसनत्कुमारवचने नामाश्रयणवतोऽपि नामापराधेनाधःपतनमुक्तम् । दृढीकृतश्चायमर्थ एतत्समनन्तरं प्रवृत्तेन 'के तेऽपराधा विप्रेन्द्र नाम्नो भगवतः स्मृताः । विनिघ्नन्ति नृणां कृत्यं प्राकृतं ह्यानयन्ति च ॥' इति श्रीनारदकृतप्रश्नवाक्येन । एवं पृष्टेन सनत्कुमारेण नामापराधा दर्शिताः— 'सतां निन्दा नाम्नः परममपराधं वितनुते यतः ख्यातं जातं कथमु सहते तद्विगर्हाम् । शिवस्य श्रीविष्णोर्य इह गुणनामादि सकलं धियाभिन्नं पश्येत्स खलु हरिनामा हितकरः ॥ गुरोरवज्ञा श्रुतिशास्त्रनिन्दनं तथार्थवादो हरिनाम्नि कल्पनम् । नाम्नो बलाद्यस्य च पापबुद्धिर्न विद्यते तस्य यमैर्विशुद्धिः ॥ धर्मव्रतत्यागहुतादिसर्वशुभक्रिया साम्यमपि प्रमादतः । अश्रद्दधाने विमुखेऽप्यशृण्वति यश्चोपदेशः स च नामापराधः ॥ श्रुत्वापि नाममहात्म्यं यः प्रीतिरहितोऽधमः । अहं ममेति परमो नाम्नः सोऽप्यपराधकृत् ॥ एवं नारद शंकरेण कृपया मह्यं मुनीनां पुरः प्रोक्तं नाम शुभावहं भगवतो वर्ज्यं सदा यत्नतः । ये ज्ञात्वापि न वर्जयन्ति सहसा नाम्नोऽपराधान्दश क्रुद्धां मातरमप्यभोजनपरां क्लिश्नन्ति ते बालवत् ॥ अपराधविनिर्मुक्तो नाम्नि यत्ने समुद्धर । नाम्नैव तव देवर्षे सर्वं सेत्स्यति नान्यथा ॥' इति । कस्य साधनस्याचरणेनोक्ता नामापराधा अनिष्टं दातुं न प्रभवन्ति न समर्थाः स्युः तत्साधनं

ब्रूहीति पृच्छति नारदः— ' सनत्कुमार प्रियसाहसानां विवेकवैराग्यविव-र्जितानाम् । देहान्नजायात्मजतत्पराणामुक्तापराधाः प्रभवन्ति नो कथम् ॥ ' इति वाक्येन । नामापराधनाशकसाधनमाह सनत्कुमारः— ' नामापराध-युक्तानां नामान्येव हरन्त्यघम् । अविश्रान्तप्रयुक्तानि तान्येवार्थकराणि च ॥ ' इति वचनेन । दश नामापराधाः संग्रहणोक्ताः ' सन्निन्दासति नामवैभवकथा श्रीशेशयोर्भेदधीरश्रद्धा श्रुतिशास्त्रदेशिकगिरां नाम्न्यर्थ-वादभ्रमः । नामास्तीति निषिद्धवृत्तिविहितत्यागौ च धर्मान्तरैः साम्यं नामनि शंकरस्य च हरेर्नामापराधा दश ॥ ' इत्यभियुक्तवचनेन । अत्र पशुपुत्रवित्तादिप्राप्तिचित्तशुद्धिविरागब्रह्मज्ञानादिदृष्टफलेषु ' व्रीहीन-वहन्ति ' इत्यादाविव यावत्फलं भगवन्नाम्न आवृत्तिरित्यविश्रान्तप्रयुक्ता-नीति सनत्कुमारवाक्यतात्पर्यार्थोऽवगम्यते ।

ननु नामकीर्तनस्य नियमसामान्यानपेक्षत्वप्रदर्शनेन तस्य सुखसंपाद्यत्वं प्रागुक्तम् । अधुना तु ' नामास्तीति निषिद्धवृत्तिविहितत्यागौ च ' इत्यादौ नामकीर्तनस्य विहिताचरणं निषिद्धवर्जनं चापेक्षितमित्युक्त्या तस्य दुःख-संपाद्यत्वमेव समर्थितमिति विरोधस्य कथं परिहार इति चेदुच्यते—विहिता-चरणं निषिद्धवर्जनं च नामकीर्तनस्याङ्गत्वेन नापेक्षितमेव, किं तु प्रतिबन्ध-काभावसिद्ध्यर्थमेवापेक्षितम्, सर्वनिरपेक्षस्यापि तत्त्वज्ञानस्य प्रतिबन्ध-काभावापेक्षास्त्येवेत्यर्थस्य सुप्रसिद्धत्वात् । अयमर्थो विस्तरेण दर्शितो नामामृतार्णवे ग्रन्थाविस्तृतत्वभियात्र संग्रहेण प्रदर्शितः ।

प्रतिबन्धकाभावसिद्ध्यर्थमपि निषिद्धवर्जनं स्वधर्माचरणं च केषांचि-देवापेक्षितं न सर्वेषाम् । तथा हि— त्रिविधा हि जना लोके नामकीर्तन-प्रवृत्त्यभिमुखा दृश्यन्ते । तत्र ये तु स्रक्चन्दनस्त्रीधनधान्यादिविषयेष्वत्य-न्तासक्तचित्ता दृढरागादिवासनावासितप्रकृतिपरवशाः सन्तो निषिद्ध-वर्जने पदकरणे प्रत्यवायस्तस्य स्वधर्मस्याचरणे चासमर्थास्तैः कृतपापस्य

कस्यापि न नामापराधरूपत्वम्, पापकर्तृणां तेषां पापकर्मवर्जने सामर्थ्याभावात्। अतस्तैर्बहुधा कृतमपि पापं सर्वं सकृन्नामकीर्तनेन नश्यत्येव। अत एव दुष्टप्रकृतिपरवशानां तेषां नाम्नास्तीति कृतमपि निषिद्धाचरणरूपं स्वधर्मपरित्यागरूपं चेति द्वौ नामापराधौ न स्तः। तद्भिन्ना अष्टौ नामापराधास्तु उक्ताशक्तानामपि बाधका अवश्यं वर्जनीयाश्च। तेषामेव श्रीभगवद्गीतासु 'अपि चेत्सुदुराचारो भजते मामनन्यभाक्। साधुरेव स मन्तव्यः सम्यग्व्यवसितो हि सः। क्षिप्रं भवति धर्मात्मा शश्वच्छान्तिं निगच्छति। कौन्तेय प्रतिजानीहि न मे भक्तः प्रणश्यति॥' इति नवमाध्यायसंदर्भः 'सर्वकर्माण्यपि सदा कुर्वाणो मद्व्यपाश्रयः। मत्प्रसादादवाप्नोति शाश्वतं पदमव्ययम्' इत्यष्टादशाध्यायसंदर्भः तद्भाष्यसंदर्भः तदानन्दगिरीयसंदर्भः पाद्मपुराणे 'अनन्यगतयो मर्त्या भोगिनोऽपि परंतपे। ज्ञानवैराग्यरहिता ब्रह्मचर्यादिवर्जिताः॥ सर्वधर्मोज्झिता विष्णोर्नाममात्रैकजल्पकाः। सुखेन यां गतिं यान्ति न तां सर्वेऽपि धार्मिकाः॥' इत्यादिपुराणेतिहासादिवचनसहस्राणि स्वधर्मत्यागमात्रे 'प्र तत्ते अद्य' इति दर्शितश्रुतिद्वयं च प्रमाणम्। ये पुनरत्यन्तविरक्ता देहपोषणेऽप्यासक्तिरहिता ऐहिकसुखासक्त्यभावेन निषिद्धाचरणप्रसक्तिरहिताः सदा नामकीर्तनादिना सकलेन्द्रियैर्भगवत्परास्तेषां मध्ये केचन स्वधर्ममाचरन्त एव नामकीर्तनादिना भगवत्पराः स्युः। अन्ये तु भगवति परमात्मनि सुतरामासक्तहृदयाः स्वधर्मानुष्ठानायावकाशरहिताः स्वधर्मोपेक्षां कुर्युस्तेन तेषां न दोषलेशोऽपि। तेषामेव भागवते 'देवर्षिभूताप्तनृणां पितॄणां न किंकरो नायमृणी च राजन्। सर्वात्मना यः शरणं शरण्यं गतो मुकुन्दं परिहृत्य कर्तम्॥' इति वचनम् 'ज्ञाननिष्ठो विरक्तो वा मद्भक्तो वानपेक्षकः। सलिङ्गानाश्रमांस्त्यक्त्वा चरेदविधिगोचरः॥' इति वचनम्, ब्रह्मकैवर्ते 'विहितमखिलकर्म ब्राह्मणानां मुनीन्द्रैर्विधिनियम-

समेतं शक्यते नैव कर्तुम् । तदखिलमपि हित्वा यो महादेवशब्दं पठति फलमशेषं प्राप्नुयात्सोऽनवद्ये ॥ इति वचनं चेत्यादिपुराणेतिहासादिवचनजातं स्वधर्मत्यागमात्रे 'प्र तत्ते अद्य' इति दर्शितश्रुतिद्वयं च प्रमाणम् । अयमर्थो भाष्यकाराणामपि एतत्सर्वमभिप्रेत्य 'एष मे सर्वधर्माणाम्' 'इत्याधिक्यमुक्तम्' इति भाष्यात्प्राक्तनभाष्ये 'मा ऋचो मा यजुस्तात मा साम पठ किंचन । गोविन्देति हरेर्नाम गेयं गायस्व नित्यशः ॥' इति वचनमुदाहरतामभिमत एवेत्यर्थो विस्पष्टः । ये तु नात्यन्तविषयासक्ता नात्यन्तविरक्ताः कथंचिन्निगृहीतप्रकृतिका निषिद्धवर्जने स्वधर्माचरणे च समर्थास्तेषां दशसंख्याकनामापराधा अपि बाधका वर्जनीयाश्च । अत्यन्तवैराग्यरहिता ये तेषां निषिद्धाचरणविहितत्यागयोर्नामापराधत्वाभिधायकानि 'नामास्तीति निषिद्धवृत्तिविहितत्यागौ च' इत्यर्थकानि पुराणानि वचनानि । 'वर्णाश्रमाचारवता पुरुषेण परः पुमान् । विष्णुराराध्यते पन्था नान्यस्तत्तोषकारकः ॥ हरिध्यानरतो वापि हरिकीर्तनतत्परः । भ्रष्टो यः स्वाश्रमाचारात्पतितः सोऽभिधीयते ॥ श्रुतिः स्मृतिर्ममैवाज्ञा यस्तामुल्लङ्घ्य वर्तते । अज्ञाच्छेदी मम द्रोही मद्भक्तोऽपि न वैष्णवः ॥' इत्यादिपुराणवचनानि प्रमाणम् । न च सर्वाणि मोक्षसाधनान्यपहाय नामकीर्तनं सदा कार्यमित्यर्थः 'प्र तत्ते अद्य' इति श्रुतिस्मृतिदर्शितः, उदाहृतपाद्मपुराणवचनैस्तु स्वधर्मत्यागेन पतित एव स्यादतः स्वधर्मं कुर्वन्नेव नामकीर्तनं कुर्यादित्यर्थो दर्शित इति कथमेतेषां श्रुतिविरुद्धपुराणवचनानां स्वार्थपरत्वमिति वाच्यम्, अत्यन्ताशक्तजनानामत्यन्तविरक्तानां च नामकीर्तनपराणां स्वधर्मत्यागप्रतिपादकयोः सावकाशयोः श्रुत्योः कांस्यभोजनन्यायेन संकोचमङ्गीकृत्य दर्शितपुराणवचनार्थस्यावकाशकल्पनाया आवश्यिकत्वात् । तथा हि— 'प्र तत्ते अद्य' इति श्रुत्योः 'आस्य जानन्तो नाम चिद्विवक्तन' इति श्रुतिद्वयापेक्षितस्य प्रतिबन्धकनिरसनाय निरन्तरनाम-

कीर्तनस्य समर्पणेन ' प्र तत्ते ' इति श्रुत्योः ' आस्य जानन्तः ' इति श्रुतिभ्यामेकवाक्यत्वं सिद्धमेव । तथा च ' आस्य जानन्तः ' इति श्रुतिभ्यां ज्ञानोद्देशेन सकृन्नामकीर्तनस्य विहितत्वेन सकृन्नामकीर्तनाद्बहून ज्ञानं कुतो न जायत इत्याकाङ्क्षायां येषां प्रतिबन्धकमस्ति तेषामेव न जायत इति श्रुत्योराशयकल्पनस्यावश्यिकत्वेन किं तत्प्रतिबन्धकमित्याकाङ्क्षायाः सिद्धत्वेन तत्प्रतिबन्धकस्वरूपज्ञानाभावेन तत्प्रतिबन्धकसिद्ध्यभावे ज्ञानोद्देशेन सकृन्नामकीर्तनविधायकश्रुत्योरनुपपन्नतायाः सिद्धत्वेन ' आस्य जानन्तः ' इति श्रुत्योरपेक्षितार्थपूरणाय प्रागुदाहृतः । दशनामापराधाभिधायकपाद्मपुराणसंदर्भ उपबृंहणं स्यादेवेति तच्च तच्छ्रुत्योरुपबृंहणम् । तच्छ्रुत्योरेकवाक्यतापन्नयोः ' प्र तत्ते ' इति श्रुत्योरप्युपबृंहणं स्यादेव । अतोऽयं दशापराधाभिधायकः संदर्भः दर्शितश्रुतिचतुष्टयस्याप्युपबृंहणं स्यादेवेति ' प्र तत्ते ' इति श्रुत्योरपेक्षया दौर्बल्याभावात्, कांस्यभोजनन्यायाच्च स्वधर्मत्यागात्पातित्यप्रदर्शकेन श्रुत्युपबृंहणरूपेण स्वधर्मत्यागो नामापराध इत्यभिधायकपुराणवचनेन सावकाशस्य नामकीर्तनेतरधर्मत्यागस्य ' प्र तत्ते ' इति श्रुत्योरर्थस्य विस्तरेणाचरणत्यागरूपत्वाश्रयणमेव युक्तम् । अत एव दृढवैराग्यरहितानां स्वधर्मस्य सर्वस्य संकोचेनाचरणपूर्वकं सदा नामकीर्तनपरत्वमाश्रयणीयम्, संकोचाश्रयणेनाभ्युदयाभावेऽपि प्रत्यवायप्रसक्त्यभावात् । गायत्र्यधिकारिणां दशगायत्रीजपेनाभ्युदयाभावेऽपि प्रत्यवायाभावस्य सुप्रसिद्धत्वेन तथा सकलधर्माणां शास्त्रेण दर्शितसंकोचकल्पने बाधकाभावेन नामकीर्तनस्य सकलधर्मोत्कृष्टतायाः श्रुतिसिद्धत्वेन च सर्वोत्कृष्टधर्माचरणाय ततो निकृष्टधर्माणां संकोचकल्पनस्य युक्तत्वात् स्वाध्यायाद्यपेक्षयोत्कृष्टज्योतिष्टोमादियज्ञानुष्ठानाय स्वाध्यायजपादीनां संकोचाश्रयणस्य सुप्रसिद्धत्वात् ' काम्यं नित्यस्य बाधकम् ' इत्यस्य सुप्रसिद्धत्वेन विजातीयमपि काम्यं विजातीयस्यापि नित्यस्य संकोचकमेवे-

त्यर्थस्य सिद्धत्वात् । अत एव ज्योतिष्टोमादिकाम्याचरणाय स्वाध्यायादिसंकोचाश्रयणस्य सिद्धत्वात् परमहंसयतिश्रेष्ठानामपि ' यतिर्द्वादशसाहस्रं नासाग्रन्यस्तलोचनः । अथ वा दशसाहस्रं नित्यं प्रणवमभ्यसेत् ॥ सहस्रं श्रवणार्थी चेन्निदिध्यासी शतं जपेत् । निर्विकल्पसमाधिस्थो न जपेत्किंचिदप्ययात् ॥ ' इति मनुवचनेन श्रवणादिकर्तॄणां प्रणवजपसंकोचस्य कण्ठरवेणोक्तत्वात् ।

तथैव परमहंसमहामुनीन्द्राणाम् ' स्वशाखोपनिषद्गीता विष्णोर्नामसहस्रकम् । श्रीरुद्रं प्रणवं चैव नित्यमावर्तयेद्यतिः ॥ ' इति स्वशाखोपनिषदादीनां द्वादशसहस्रप्रणवजपस्य चेति पञ्चानामाचरणायावकाशसिद्ध्यर्थं वेदान्तश्रवणस्य संकोचकल्पनाया आवश्यिकत्वात् एतत्पञ्चानामवकाशाय वेदान्तश्रवणसंकोचाकाङ्क्षायाः तथा भगवत्पादैर्वेदान्तसारभूतार्थं सर्वमपि पञ्चीकरणाख्यग्रन्थे प्रतिपाद्य स च पञ्चीकरणाख्यग्रन्थो नित्यनित्यमावर्तयितव्य इति कृतनियमस्य च पर्यालोचनया तत्पञ्चीकरणमात्रपारायणे कृते तत्पञ्चीकरणव्यतिरिक्तवेदान्तश्रवणकरणाभावेन प्रत्यवायो न भवत्येवेति भाष्यकाराणामाशयोऽवगम्यते । उक्तप्रयोजनं विना पञ्चीकरणस्य प्रयोजनान्तराभावात् काम्याचरणाय नित्यानां संकोचाङ्गीकारो न दोषायेत्युक्तत्वाच्च । सकलधर्मोत्कृष्टत्वेन वेदोक्तस्य नामकीर्तनस्याचरणाय नित्यानित्यसंकोचाश्रयणेन न कोऽपि दोष इत्ययमर्थोऽपि ' प्र तत्ते ' इति श्रुत्यर्थ एवेत्यर्थोऽपि सिद्ध एव । एवं च परमहंसयतिवरोऽपि वेदान्तश्रवणं किंचिदप्यकृत्वा नामकीर्तनं करोति चेत्तद्यते रुद्रयातनारूपदुर्गतिर्दुर्वारेति कैश्चिदभियुक्तैरुक्तमनुसृतमेव भवति । पञ्चीकरणपठनरूपं संकुचितवेदान्तश्रवणमपि यो यतिर्न करोति तस्यैव सा दुर्गतिर्नान्यस्य पञ्चीकरणकर्तो नामकीर्तनपरस्येति सिद्धत्वात् स्वधर्मं सर्वं संग्रहेण कुर्वन्नामकीर्तनं करोति चेत्तस्य दोषकल्पनासंभवात् ।

किं च ' विप्राणां यतियोगिनां श्रुतिमतां वेदान्तिनां कर्मिणां चण्डालादिषु यौवनं च भजतामेकान्ततोवासिनाम् । हत्यापानसुवर्णचौर्यगुरुदारासंगमं कुर्वतां सर्वेषामिदमेव नाम शरणं विष्णोः परं मङ्गलम् ॥ ' इति क्रतुस्मृतिवचनेन सकलवर्णानां सकलाश्रमिणां च नित्याचारसंकोचपूर्वकं नामकीर्तनं कार्यमित्यर्थः स्फुटं दर्शितः । तथा हि– अस्मिन्वचने ' चण्डालादिषु यौवनं च भजताम् ' इत्यादिनोक्तानां नानाविधसकल–पापकर्तॄणां विष्णोर्नाम परममुत्कृष्टं शरणं तत्पापेभ्यो रक्षकं पापनिवर्तकानां सकलप्रायश्चित्तानां मध्ये नामैव परमं प्रायश्चित्तमिति तथा ' विप्राणाम् ' इत्यादिनोक्तानां श्रेयःसाधनाचरणपराणामिदं नामैव परमं मङ्गलं मङ्गलसाधनं सकलश्रेयःसाधनानां मध्ये नामैव नाममात्रमुत्कृष्टमिति चार्थोऽवश्यं वाच्यः । नाम्नो विध्यसंभवेन नाम्नः स्मरणकीर्तनश्रवनान्यतमग्रहणे विनिगमकाभावेन च नामस्मरणादित्रयमप्यत्र विधेयमित्यर्थश्च । तथा च 'श्रुत्वा धर्मान् ' इति वैशम्पायनवाक्यादिभारतसंदर्भतद्भाष्ययोरिवास्मिन्वचनेऽपि नामस्मरणं नामकीर्तनं नामश्रवणं चेति त्रयाणां प्रत्येकं सकलपापक्षयं प्रत्यप्रतिबद्धापरोक्षात्मज्ञानान्तसकलश्रेयःप्राप्तिं प्रति च परमं साधनत्वं विधीयते । तेन सकलपापक्षयसाधनानां सकलाभ्युदयनिःश्रेयससाधनानां च मध्ये सर्वोत्कृष्टसाधनं नामेत्यर्थः सिद्धः । नामकीर्तनस्य तदुत्कृष्टसाधनत्वं च सकलफलसाधनत्वे सति सुखसंपाद्यत्वरूपं दर्शितभाष्योक्तमेवेति सिद्धम् । एवं चात्र ' श्रुतिमतां वेदान्तिनां कर्मिणाम् ' इति पदत्रयसार्थक्याय नित्यत्वेन विहितं श्रुतिपारायणं वेदान्तश्रवणं कर्माचरणं च संकोच्य सकलश्रेयःसाधनापेक्षयोत्कृष्टसाधनरूपं नामकीर्तनं कुर्यादित्यर्थोऽवश्यमभ्युपगन्तव्यः । अन्यथा तत्पदत्रयस्य वैयर्थ्यापत्तेः । ' विप्राणां यतियोगिनाम् ' इति पदद्वयेनैव चतुर्णामाश्रमिणां नामकीर्तनेऽधिकारस्य दर्शितत्वात् काम्यैः श्रुतिपारायणवेदान्तश्रवणकर्मभिः नामकीर्तनस्य विकल्पासिद्ध्यर्थम् ' श्रुति-

मताम् ' इत्यादिपाठोऽस्त्विति वाच्यम्, सकलपापक्षयहेतुत्वेन सकलश्रेयः-साधनत्वे च विधानमात्रादेव नामकीर्तनस्य सकलप्रायश्चित्तैः केवलकाम्यरूप सकलश्रेयःसाधनैश्च विकल्पसिद्धिसंभवात् 'श्रुतिमतां वेदान्तिनां कर्मिणाम्' इत्येकादशाक्षरस्थाने ' श्रुतिमतां श्रयोर्थिनाम् ' इत्यष्टाक्षरपाठापत्तेश्च । अतः सिद्धमेवानेन वचनेन नित्यमपि श्रुतिपारायणं नित्यमपि वेदान्तश्रवणं नित्यान्यपि सकलकर्माणि यथाशास्त्रं संकोच्य नामकीर्तनं कार्यमिति । किं च मोक्षेच्छूनां नामकीर्तने कृतेऽपि यस्य मूलाविद्यानिवर्तकज्ञानं नोत्पद्यते तस्य तज्ज्ञानप्रतिबन्धकतया नामापराधोऽस्त्येवेति सिद्धत्वेन नामकीर्तनादि-तरमुक्तिसाधनानां नामापराधनाशने नामकीर्तनसामर्थ्यसमानसामर्थ्याभावेन च ज्ञानेच्छूनां नामापराधनाशनाय निरन्तरनामकीर्तनमवश्यं कार्यमेवेति सिद्धम् ।

नामकीर्तनेन तत्त्वज्ञानोत्पत्तिश्च नामकीर्तनेन सम्यक्परिशुद्धकरण-ग्रामाणामत्यन्तविरक्तानां मध्ये केषांचिज्जगदीश्वरकृपावशात्सच्चिदानन्दं ब्रह्मैव जीवस्वरूपं नान्यदिति ज्ञानेन मुक्तिः स्यादित्यद्वैतवादिनां प्रवादः श्रूयते । तत्प्रवादानुसारेणाहं किं ब्रह्मैवान्यो वेति पर्यालोचनया तत्त्व-ज्ञानं जायत इत्यङ्गीकर्तव्यम् । तैत्तिरीयोपनिषदि तद्भाष्ये तद्वार्त्तिके च भगवतो भृगुमहर्षेस्तपःशब्दितपर्यालोचनयैव तत्त्वज्ञानमभवदित्युक्तत्वात्, उक्तविरक्तानां मध्ये केषांचिदुक्तप्रवादश्रवणेन 'कोऽहम्' इति पर्यालोचन-पराणां परमात्मनो नामात्मकप्रमाणेनैव तत्त्वनिश्चयः स्यादेवेत्यङ्गीकार्यम्, प्रसिद्धानां भगवन्नाम्नां सर्वेषां त्रिविधपरिच्छेदरहितपरब्रह्मार्थकत्वात् । उक्तं च ' सर्वाण्येतानि नामानि परस्य ब्रह्मणोऽनघ ' इति सहस्रनाम-भाष्ये दर्शितविष्णुधर्मवचनेन ' रमन्ते योगिनोऽनन्ते सत्यानन्दे चिदात्मनि । इति रामपदेनासौ परं ब्रह्माभिधीयते ॥ ' इति रामतापन्युपनिषद्वाक्येन च भगवन्नाम्नैव ब्रह्मसाक्षात्कारः स्यादित्यर्थः कण्ठरवेणोक्तः । च्यवनस्मृतौ

प्रायश्चित्तप्रकरणे ' श्रुतिस्मृतिपुराणेषु रामनाम समीरितम् । तन्नामकीर्तनं भूयस्तापत्रयविनाशनम् ॥ सर्वेषामेव पापानां प्रायश्चित्तमिदं स्मृतम् । नातः परतरं पुण्यं त्रिषु लोकेषु विद्यते ॥ नामसंकीर्तनादेव तारकं ब्रह्म दृश्यते । ' इति संदर्भेण भगवन्नामात्मकप्रमाणेन तत्त्वज्ञानं भवेदेवेत्यर्थो दर्शितः । श्रीनृसिंहाश्रमचरणैर्भेदधिक्कारे नृसिंह इति नामैव ब्रह्मात्मैक्यं बोधयतीत्यर्थं प्रतिपादयद्भिः उक्तविरक्तानां मध्ये केषांचिदुक्तप्रवादश्रवणेन संदिहानानां जगदीश्वरानुग्रहवशादुपनिषन्महावाक्यमुपस्थितं स्यात् , तेन तत्त्वज्ञानं स्यादित्यभ्युपगन्तव्यम् । उक्तश्चायमर्थः ' सोऽबिभेत् , तस्मादेकाकी बिभेति ' इत्यादिबृहदारण्योपनिषत्संदर्भतद्भाष्यतद्वार्त्तिकतदानन्दगिरीयेषु हिरण्यगर्भस्य जातमात्रस्य प्राक्तनसुकृतवशादत्यन्तपरिशुद्धकरणग्रामस्योपनिषद्वाक्यमुपस्थितं तेन तत्त्वज्ञानमभवदिति प्रतिपादनेन । अन्येषां तु नामकीर्तनेन साधनचतुष्टयसंपत्तिः स्यात् तदनन्तरं वेदान्तश्रवणमनननिदिध्यासनैस्तत्त्वज्ञानं स्यादित्युक्तोऽयमर्थः मात्स्ये ' विष्णोर्नामैव पुंसः शमलमपनुदत्पुण्यमुत्पादयच्च ब्रह्मादिस्थानभोगाद्विरतिमथ गुरोः श्रीपदद्वन्द्वभक्तिम् । तत्त्वज्ञानं च विष्णोरिह मृतिजननभ्रान्तिबीजं च दग्ध्वा पूर्णानन्दैकबोधे महति च पुरुषं स्थापयित्वा निवृत्तम् ॥ ' इति वचनेन । अन्येषां तु कृतवेदान्तश्रवणमनननानां निदिध्यासनस्थाने नामकीर्तने कृते तन्नामकीर्तनेनाप्रतिबद्धापरोक्षात्मज्ञानं भवेदेव, नामकीर्तनेन निदिध्यासनफलं भवेदित्यर्थप्रतिपादकस्य ' ध्यायन्कृते यजन्यज्ञैः ' इति विष्णुपुराणवचनस्य तदर्थस्य च प्रागेव दर्शितत्वात् । अन्येषां तु प्रायणकाले नामकीर्तनेनैवाप्रतिबद्धापरोक्षात्मज्ञानं भवेदेव । एतदर्थाभिधायकस्य ' तन्नामकीर्तनादेव तारकं ब्रह्म दृश्यते ' इति च्यवनस्मृतिवचनस्यानुपदं दर्शितत्वात् । अन्येषां तु नामकीर्तनपराणां प्रायणकाले जगदीश्वरस्तत्त्वज्ञानोपदेशं करोति, तेन तत्त्वसाक्षात्कारः स्यादित्यङ्गीकार्यम् । दर्शितश्चायमर्थः स्कान्दे श्रीरामगीतासु— ' यावज्जीवं प्रणवमथ वा वर्तयेद्बुद्धियं वा

आजुर्वेदं वसतिमथ वा वारणस्यां विदध्यात् । त्यक्त्वा लज्जां कलिमलविषच्छेदकानीरयेद्वा विष्णोर्नामान्यनिशममृतप्राप्तिरेषा चतुर्धा ॥ ' इति वचनेन काश्यां मरणकाले परमेश्वरस्तारकमुपदिशतीत्यर्थस्य काशीखण्डादौ सुप्रसिद्धत्वेन तस्मिन्वचने नामकीर्तनस्य काशीवाससमभिव्याहारान्नामकीर्तनपराणामपि मरणकाले तारकोपदेशकल्पनस्यावश्यिकत्वात्, अन्यथा तत्समभिव्याहारस्य वैयर्थ्यापत्तेः । एते पक्षाः सर्वेऽपि ज्ञानसाधनत्वेन सकृन्नामकीर्तनविधायकानाम् ' आस्य जानन्तः ' इति ऋग्वेदयजुर्वेदमन्त्रौ ' ज्ञानमार्गे च नामतः ' इति रामतापन्युपनिषद्वाक्यं चेति त्रयाणां श्रुतिवाक्यानां संमताः । अत एव तत्पक्षाः सर्वे श्रौता एवेति सर्वं सुस्थम् ।

नन्वत्र सकलपापक्षयसाधनैः सकलाभ्युदयसाधनैः सकलमुक्तिसाधनैश्च विकल्पेन साधनमिदं सकृन्नामकीर्तनमङ्गसामान्यानपेक्षमेवेत्युक्तं तदनुपपन्नमेव लघुगुरुसाधनयोर्विकल्पाङ्गीकारे गुरुसाधने कस्यापि प्रवृत्तिर्न स्यादिति गुरुसाधनाभिधायकशास्त्रस्य सर्वस्याप्यननुष्ठानलक्षणाप्रामाण्यापत्तेः । अतो नामकीर्तनशास्त्रस्य सकलगुरुसाधनाभिधायकशास्त्राणां च विरोधस्य प्रतीयमानत्वेन कस्य शास्त्रस्य स्वार्थपरत्वं कस्य शास्त्रस्यान्यथानयनमिति पर्यालोचिते बहूनामनुग्रहन्यायेन गुरुसाधनाभिधायकशास्त्राणामत्यन्तबहुत्वेन तच्छास्त्राणामनुसारेणात्यन्तस्वल्पस्य नामकीर्तनशास्त्रस्यान्यथानयनमेवोचितम् । किं च मीमांसकैरग्निहोत्रदर्शपूर्णमासज्योतिष्टोमविश्वजिद्यागानां स्वर्गसाधनत्वेनोक्तानामायासतारतम्येन कण्ठरवेणैव स्वर्गफले तारतम्यस्योक्तत्वेन साधनायासतारतम्येन फलतारतम्यं सर्वत्र कल्पनीयमेवेत्युक्तप्रायत्वात् । अत एव हि निबन्धनकारैर्लघुपापे लघुप्रायश्चित्तमेव गुरुपापे गुरुप्रायश्चित्तमेवेति प्रायश्चित्तायासतारतम्येन पापक्षयतारतम्यं कल्पितम् । अतः सर्वथानुपपन्न एव लघुगुरुसाधनयोरैच्छिकविकल्प इति चेत् ; अत्रोच्यते—यदुक्तं लघुगुरुसाधनविकल्पाङ्गीकारे गुरुसाधनेषु प्रवृत्तिर्न स्यादिति

तदसत्, दृश्यमानप्रवृत्ते रुचिवैचित्र्यादुपपन्नताया वक्ष्यमाणत्वेनोपरि कर्मबोधकशास्त्रेष्वननुष्ठानलक्षणाप्रामाण्यस्य प्रसक्त्यभावात् । ननु नामकीर्तनं सकलपापक्षयसाधनं सकलपुरुषार्थसाधनं चेति प्रशंसन्तो विद्वांसोऽविद्वांसश्च स्वल्पा जनास्तत्र प्रवर्तन्ते । बहवस्तु विद्वांसोऽविद्वांसश्च नामकीर्तनं कस्मिन्नपि फले स्वतन्त्रसाधनं न भवत्येवेति नामकीर्तनं निन्दन्तो गुरुसाधनेष्वेव प्रवर्तमाना दृश्यन्ते । तथा चान्यतरजनानां भ्रान्तिरवश्यं कल्पनीयेति बहूनामनुग्रहन्यायेन नामकीर्तने प्रवृत्तिपरस्वल्पजनानां भ्रान्तिः कल्पनीया । तथा च नामकीर्तनस्य स्वतन्त्रसाधनत्वं न सिध्यत्येवेति चेत्; सत्यं निन्दन्त्येव बहवः । तथापि नामकीर्तनस्य साधनत्वमपलपन्तीति तदनुसारेण नामकीर्तनशास्त्रस्यान्यथानयनमसंगतमेव, सर्वेषां शास्त्रोक्तसाधनानामसाधनत्वाभिधानेन निन्दका बहवो जनाः सन्त्येवेति सकलालौकिकश्रेयःसाधनानामसाधनत्वाङ्गीकारापत्तेः । तथा हि—ब्रह्मज्ञानस्य प्रशस्यता तज्ज्ञानस्य साधनत्वाभिधानेन तन्निन्दकानामनर्थप्राप्तिश्चोक्ता भगवद्गीतानवमाध्याये ‘ राजविद्या राजगुह्यं पवित्रमिदमुत्तमम् । प्रत्यक्षावगमं धर्म्यं सुसुखं कर्तुमव्ययम् ॥ अश्रद्दधानाः पुरुषा धर्मस्यास्य परंतप । अप्राप्य मां निवर्तन्ते मृत्युसंसारवर्त्मनि’ इति वचनद्वयेन । दृश्यन्ते चाद्वितीयब्रह्मज्ञानस्य मुक्तिं प्रत्यसाधनत्वाभिधानेन तन्निन्दका गौतमकाणादजैमिनिपातञ्जलकापिलतन्त्राभिमानिनो माध्वरामानुजशैवशाक्तहैरण्यगर्भाश्चेति वेदान्त्येकदेशिनश्च बहवः । एवमद्वितीयब्रह्मात्मनावस्थानरूपमुक्तिसिद्ध्यर्थं सकलधर्माचरणपराणां मोक्षः तद्धर्मेष्वभ्यसूयया तद्धर्माणामसाधनत्वाभिधानेन तद्धर्मनिन्दकानामनर्थो योक्तव्यः ‘ ये मे मतमिदं नित्यमनुतिष्ठन्ति मानवाः । श्रद्धावन्तोऽनसूयन्तो मुच्यन्ते तेऽपि कर्मभिः ॥ ये त्वेतदभ्यसूयन्तो नानुतिष्ठन्ति मे मतम् । सर्वज्ञानविमूढांस्तान्विद्धि नष्टानचेतसः ॥ ’ इति भगवद्गीतायां भगवद्वचनद्वयेन । दृश्यन्ते च तन्निन्दका गौतमकाणादादितन्त्राभिमानिनो माध्वरामानुजादयो वेदान्त्येकदेशिनश्चानुपदमुक्ताः । सर्वेषामेतेषां ब्रह्मा-

स्मनावस्थानरूपकैवल्यमीश्वरार्पणबुद्ध्या कृतसकलधर्माणां तत्कैवल्यहेतु-त्ववचनमभिमतमैकत्यस्यार्थस्य सुप्रसिद्धत्वात् । एवं गौतमकाणादादिभिः कृतान्कांश्चित्सिद्धान्तान्माध्वरामानुजादिभिः कृतान्कांश्चित्सिद्धान्तांश्च बहवो निन्दन्त्येवेत्यर्थः सुप्रसिद्धः । अतो बहवो निन्दन्तीति मिथ्या शास्त्रस्यान्यथा-नयनं केनापि न कृतमिति सर्वज्ञशिखामणिभिर्भगवत्पादैर्निर्णीतार्थस्य श्रीमद्विद्यारण्यप्रभृतिभिरीश्वरकल्पैरङ्गीकृतस्य नामकीर्तनमाहात्म्यस्याज्ञाने-नारुच्या च निन्दकानुसारादन्यथानयनशङ्कात्यन्तबुद्धिमान्द्यकृतैवेत्यर्थो विस्पष्टः । यत्पदार्थे येषामरुचिस्तेषां तत्पदार्थनिन्दकत्वं यत्पदार्थे येषां रुचिस्तेषां तत्पदार्थे प्रवृत्तिश्च लोके दृश्यते । तथा हि द्रविडदेशादौ स्थित-जनानां मध्ये केभ्यश्चिन्मरीचिलवणमिश्रितेन मरीचिरससंज्ञकेन तप्तोदके-नान्नभोजनं रोचते ते तत्र प्रवर्तन्ते च । अन्येभ्यस्तु तन्न रोचते ते तत्र न प्रवर्तन्ते प्रत्युत तन्मरीचिरसं निन्दन्ति च । अतस्तेभ्यः प्रागुक्तमरीचिर-रसापेक्षयाधिकवित्तव्ययाधिकशरीरायाससाध्येन बह्वम्लबहुमरीचियुक्तेनाम्ल-मरीचिरससंज्ञकेनान्नभोजनं रोचते ते तत्र प्रवर्तन्ते । बह्वम्लरसश्च केभ्यश्चिन्न रोचते भोक्तुमशक्यश्च । अतस्ते तमम्लरसं निन्दन्ति चासुरयोग्योऽयमम्लरस इति । अन्यभ्यस्तु तक्रान्नभोजने उपदंशनार्थं निम्बपत्रचूर्णं रोचते । इतरे-भ्यस्तु तद्भोजने तच्चूर्णं न रोचते, तच्चूर्णमशक्यं भोक्तुमतस्ते तन्निन्दन्ति च । एवं कुस्तुम्बरीसंस्कृतशाकादिकं मरीचितिन्त्रिणीयुक्तं कुस्तुम्बरीपत्रपिष्टं चेत्युभयं केभ्यश्चिद्रोचते ते तत्र प्रवर्तन्ते च । अन्येभ्यस्तु तदुभयं न रोचते भोक्तुमशक्यमाघ्राणेनापि वमनकरं चातस्तदुभयं निन्दन्ति च । अत्यन्ताम्लं दधि केभ्यश्चिद्भोक्तुं रोचते केभ्यश्चिन्न रोचते भोक्तुमशक्यं च, अतस्ते तन्निन्दन्ति च । तथा च केषांचिदशक्येऽन्येषां रुचिः प्रवृत्तिश्च अन्येषाम-शक्ये केषांचिद्रुचिः प्रवृत्तिश्च दृश्यते । तथा च लोके येषां यत्पदार्थेऽ-रुचिस्ते तत्पदार्थान्निन्दन्ति, तैर्निन्दितेऽपि पदार्थे येषां रुचिस्ते तत्र प्रवर्तन्ते तत्पदार्थनिन्दकान्नैव गणयन्ति अरुचिवशान्निन्दकानां वाक्यं न श्रोतव्य-

मेवेति निन्दकानेव निन्दन्ति च । तथा अरुच्या बहुभिर्निन्दितेऽपि शास्त्रोक्त-साधने येषां रुचिस्तेषां जनानां तत्र प्रवृत्तिरुचितैव, अरुच्या निन्दकस्य वार्त्ता न श्रोतव्येति लोकरीत्या सिद्धमेव । दर्शितश्चायमर्थः शास्त्रेष्वपि । तत्र भगवद्गीतायामरुचिवशाद्बहुभिर्निन्दितेऽपि ब्रह्मज्ञाने रुच्या येऽधिकारिणः प्रवर्तन्ते तेषां न कापि हानिः, तज्ज्ञानं मुक्तिहेतुर्भवत्येवेत्यर्थो दर्शितः ' राजविद्या राजगुह्यम्— ' इत्यनुपदमुदाहृतवचनद्वयेन । एवमरुच्या बहुभिर्निन्दितेषु ब्रह्मात्मनावस्थानरूपमुक्त्यर्थकसकलधर्मेषु रुच्या येऽधिकारिणः प्रवर्तन्ते तेषां न कापि हानिः तैः धर्मैः सा मुक्तिर्भवत्येव, तत्रैव भगवद्गीतायाम् ' ये मे मतमिदं नित्यम्— ' इत्यनुपदमुदाहृतवचनद्वयेन ।

एवमरुच्या भगवद्भजनमकृत्वा बहवो भगवन्तमवजानन्ति, ते महान्तमनर्थं प्राप्नुवन्ति, बहुभिरवमतस्यापि भगवतः सततं कीर्तनादिरूपभजनं ये रुच्या कुर्वन्ति तेषां न कापि हानिः, प्रत्युत ते महात्मानो दैवीं प्रकृतिमाश्रिता इत्यर्थो दर्शितः ' अवजानन्ति मां मूढा मानुषीं तनुमाश्रितम् । परं भावमजानन्तो मम भूतमहेश्वरम् ॥ मोघाशा मोघकर्माणो मोघज्ञाना विचेतसः । राक्षसीमासुरीं चैव प्रकृतिं मोहिनीं श्रिताः ॥ महात्मानस्तु मां पार्थ दैवीं प्रकृतिमाश्रिताः । भजन्त्यनन्यमनसो ज्ञात्वा भूतादिमव्ययम् । सततं कीर्तयन्तो मां यतन्तश्च दृढव्रताः । नमस्यन्तश्च मां भक्त्या नित्ययुक्ता उपासते ॥ ' इति श्लोकचतुष्टयेन ।

एवम् ' सर्वार्थशक्तियुक्तस्य देवदेवस्य चक्रिणः । यद्वाभिरोचते नाम तत्सर्वार्थेषु कीर्तयेत् । सर्वार्थसिद्धिमाप्नोति नाम्नामेकार्थता यतः ॥ ' इति सहस्रनामभाष्यान्ते भगवत्पादैर्दर्शितविष्णुधर्मवचनेन ' यद्वाभिरोचते नाम ' इत्युक्त्या भगवन्नाम्नां मध्ये किंचिन्नाम रोचते केभ्यश्चित् एकमपि नाम केभ्यश्चिन्न रोचत इत्यर्थो दर्शित इत्यनेन । येषामरुचिस्ते भगवन्ना-

मानि निन्दन्ति, येषां रुचिर्भगवन्नामसु ते प्रवर्तन्ते, तेषां भगवन्नामभिः सर्वार्थसिद्धिः स्यादेवेत्यर्थो दर्शितः । अतः सिद्धं नामकीर्तने प्रवृत्तिमतां नामकीर्तने रुच्यभाववद्भिः कृतनिन्दया न कोऽपि दोष इति । एवं दृश्यमानलघुकर्मरूपनामकीर्तनमपहाय बहूनां गुरुकर्मसु प्रवृत्तिश्चोपपन्नैव, नामकीर्तने रुचिरहितानां गुरुकर्मस्वेव रुचियुक्तानां गुरुकर्मस्वेव प्रवृत्तेरवश्यंभावित्वात् । शारीरकमीमांसायां देवताधिकरणे दर्शितेन 'तेषां ये यानि कर्माणि प्राक्सृष्ट्यां प्रतिपेदिरे । तान्येव ते प्रपद्यन्ते सृज्यमानाः पुनः पुनः । हिंस्राहिंस्रे मृदुक्रूरे धर्माधर्मौ ऋतानृते । तद्भाविताः प्रपद्यन्ते तस्मात्तत्तस्य रोचते ॥' इति वचनसंदर्भेण लौकिकेष्वलौकिकेषु गुरुषु लघुषु च कर्मत्वावच्छिन्नसकलकर्मसु रुचिवैचित्र्यात्प्रवृत्तेर्दर्शितत्वात् । तथा हि तेषां सृष्टप्राणिनां मध्ये ये प्राणिनः प्राक्सृष्ट्यां यानि कर्माणि लौकिकान्यलौकिकानि लघूनि गुरूणि च प्रतिपेदिरे प्राप्तवन्तः, येषु कर्मसु प्रवृत्ता इति भावः । पुनः सृज्यमानास्ते प्राणिनः तान्येव प्रागाचरितकर्माण्येव पुनः प्रपद्यन्ते प्राप्नुवन्ति, पूर्वकृतकर्मजनितवासनावशात्प्रागाचरितकर्मस्वेव पुनः प्रवर्तन्ते इति भावः । 'तेषां ये यानि' इत्याद्यवचनोक्तकर्माणि लौकिकान्यलौकिकानि चेत्यष्टविधानीत्यर्थप्रदर्शनपूर्वकं प्रागाचरितकर्मजनितवासनावशादेव जातरुचिवैचित्र्यात्प्रागाचरितकर्मस्वेव प्रवर्तन्ते इत्यर्थं दर्शयति 'हिंस्राहिंस्रे' इति द्वितीयवचनं धर्माधर्मावित्यलौकिककर्मणामुक्तत्वात्, हिंस्राहिंस्रे इति हिंस्राहिंस्रकर्मणोरुक्तत्वेन मृदुक्रूरे इत्यनेनोक्तमृदुक्रूरकर्माणि लघुगुरूण्येव अत्र मृदुक्रूराणि क्रियात्मकान्येवेति सिद्धत्वेन मृदुशब्दः मृदुस्पर्शद्रव्ये मुख्यः स्पर्शरहितपदार्थे गौणः इत्यर्थस्य तथा क्रूरशब्दः चेतनरूपघातुके मुख्यः अचेतनरूपक्रियायां गौण इत्यर्थस्य च सिद्धत्वेन कर्मणो मृदुत्वं सुलभत्वम्, तच्च सुखसंपाद्यत्वमेव, कर्मणि क्रूरत्वं च दुर्लभत्वमेव, तच्चात्यन्तायाससाध्यत्वमेव । अत एवात्यन्तायासेन यत्किंचित्कर्म कुर्वन्तं दृष्ट्वा अत्यन्तक्रूरकर्म करोत्युदरनिमित्तमिति अत्यन्तक्रूरं

तपश्चरति परलोकार्थमिति च व्यवहारो दृश्यते । यथा भगवद्गीतायाम् 'अशास्त्रविहितं घोरं तप्यन्ते ये तपो जनाः । दम्भाहंकारसंयुक्ताः कामराग-बलान्विताः ॥ कर्शयन्तः शरीरस्थं भूतग्राममचेतसः । मां चैवान्तःशरीरस्थं तान्विद्ध्यासुरनिश्चयान् ॥' इति संदर्भेण । घोरं तपः तथात्यन्तदुरनुष्ठेयं तत्स्वरूपं चोक्तम् । तथास्य कर्मणः क्रूरत्वमायाससाध्यत्वमेवेत्यवगम्यते । किं चात्र तेषां ये यानि इति प्रथमवचने येषां ये यानि कर्माणीति सामान्येन कर्मत्वावच्छिन्नकर्माणि सर्वाण्युक्त्वा तेषामेव कर्मणां विशेषरूपत्वाभिधानायारभ्य 'हिंस्राहिंस्रे' इत्यादिना अष्टविधतया उक्तत्वेन एतेष्वष्टविधकर्मसु नानाविधभेदभिन्नानि कर्माणि सर्वाण्यन्तर्भूतानीत्यवश्यं वक्तव्यत्वेन मृदुक्रूरे इति वाक्यस्य लघुगुरुकर्मपरत्वमनिवार्यमेव । एवं लघुगुर्वादिभेदभिन्नेष्वष्टविधकर्मसु प्रवृत्तिहेतुरुक्तः 'तद्भाविताः' इत्यादिना । तद्भाविता अष्टविधकर्मस्वेकेन वा द्वाभ्यां बहुभिर्वा यैः कर्मभिर्ये जना भाविता वासिताः तान्येव वासनोत्पादककर्माण्येव ते जनाः प्रपद्यन्ते यत्कर्मजातवासनाश्रया ये जनास्ते तद्वासनावशात्तेष्वेव कर्मसु प्रवर्तन्ते इति भावः । तद्वासनानां प्रवृत्तिजनकत्वं च तत्कर्मसु रुच्युत्पादनद्वारेत्याशयेनाह —तस्मादिति । तस्मात् तत्कर्मवासनावासितत्वात् तत्कर्म तस्मै जनाय रोचते तद्रुचिवशात्तद्वासनोत्पादककर्मणि प्रवर्तते इति भावः । हिंस्रेति श्लोकस्यायं भावः—हिंस्राद्यष्टविधकर्मसु पूर्वं गुरुकर्माचरणेन गुरुकर्मवासनावासितप्रकृतिका ये जनास्तेषां गुरुकर्मस्वेव रुचिरुत्पद्यते, तद्रुचिवशात्ते जना गुरुकर्मस्वेव प्रवर्तन्ते । एवं लघुकर्मणि हिंस्रकर्मादौ चेत्यष्टविधकर्मस्वपि प्रवर्तन्ते इति । तथा च तेषां ये यानीत्यादिश्लोकद्वयेन यस्मिंल्लँघुनि वा गुरुणि वान्यस्मिन्वा कर्मणि वासनावशाद्रुचिरुत्पद्यते यस्य जनस्य स तस्मिन्नेव कर्मणि प्रवर्तत इत्यर्थः सिद्धः । किं च न्यायोपबृंहितं चैतद्वचनद्वयम् । तथा हि—मधुराम्ललवणकटुकषायतिक्तरसवत्पदार्थानां मध्ये यस्मिन्पदार्थे भोजनार्थिनो यस्य रुचिः स तस्मिन्पदार्थे प्रवर्तते यस्य

यस्मिन्पदार्थे रुच्यभावः स तस्मिन्न प्रवर्तते । तथा च कश्चन पदार्थः केषांचिदरुच्या अशक्य एव भोक्तुम् अतस्ते तत्र न प्रवर्तन्ते केषांचिद-शक्ये पदार्थेऽन्येषां प्रवृत्तिश्च दृश्यते इत्यर्थः प्राग्विस्तरेण दर्शितः । तथा च यस्य यस्मिन्पदार्थे रुचिः स तस्मिन्पदार्थे प्रवर्तते यस्य यस्मिन्वस्तुनि रुच्यभावः स तस्मिन्सर्वथा न प्रवर्तते इत्यर्थः । 'लोके तेषां ये यानि' इति वचनद्वये च समानतया दृश्यत इति तद्वचनद्वयस्यैतल्लौकिकन्यायोपबृंहि-तत्वमनिवार्यम्, न्यायोपबृंहितवचनं न्यायविरुद्धवचनजातादपि प्रबलमित्ये-तत्सकलशास्त्राभिमतमित्यर्थः सुप्रसिद्ध इति न्यायोपबृंहिततया प्रबलाभ्याम् 'तेषां ये यानि' इत्यादिदर्शितवचनाभ्यां वासनावशाद्यस्य यत्र रुचिः स तत्र प्रवर्तते इत्यर्थाभिधानेनात्यन्तलघुभूते नामकीर्तने रुच्या स्वल्प-जनानां विदुषामविदुषां च प्रवृत्तेः । तथा नामकीर्तनेऽरुच्या अत्यन्तगुरु-भूतधर्मेष्वेव रुच्या बहूनां विदुषामविदुषां च प्रवृत्तेश्चोपपन्नत्वं दर्शितम् । सितशर्करान्वितात्यन्तोत्तमगोक्षीरे उत्तमासितशर्करागोघृताभ्यां विनिर्मिते गोधूमपिष्टविकाररूपलड्डुकोत्तमे चारुच्या केषांचित्तद्भोजनप्रवृत्त्यभावस्य दर्शनात् बहूनां द्राविडदेशस्थानां निम्बपत्रचूर्णे रुचिवशादत्यन्तारुचिहर-मिदं चूर्णमिति श्लाघनपूर्वकं तत्र प्रवृत्तेर्दर्शनात् । एकस्मिन्नेव कुस्तुम्बरी-पत्रपिष्टे दृढरुचियुक्तानां महाराष्ट्राणामत्यन्तश्लाघनपूर्वकं तत्र प्रवृत्तेः तथा तस्मिन्नेव पिष्टेऽत्यन्तारुचियुक्तानां बहूनामत्यन्तनिन्दनपूर्वकं वमनपूर्वकं च निवृत्तेश्च दृश्यमानत्वात् । महिम्नःस्तवेऽप्ययमर्थो दर्शितः—'त्रयी सांख्यं योगः पशुपतिमतं वैष्णवमिति प्रभिन्ने प्रस्थाने परमिदमदः पथ्यमिति च । रुचीनां वैचित्र्यादृजुकुटिलनानापथजुषां नृणामेको गम्यस्त्वमसि पयसामर्णव इव ॥' इति श्लोकेन । तद्वचने कुटिलमार्गे रुचिमांस्तन्मार्गं परमिदमदः पथ्यमिति स्तुवन्प्रवर्तेत इत्यर्थप्रतिपादनेन कुटिले रुचिमानृजुमार्गमपीदम-श्रेष्ठमिदमपथ्यमिति निन्दन्नृजुमार्गान्निवर्तेत इत्यर्थो दर्शितः । एवमृजुमार्गे रुचिमान्कुटिलं निन्दन्नृजौ प्रवर्तेत इत्यर्थोऽपि दर्शितः । अतो नामकीर्तनेऽ-

रुचिवशाद्बहूनां तन्निन्दनपूर्वकं ततो निवृत्तेर्गुरुकर्मसु दृढरुचिवशात्तत्कर्मसु प्रवृत्तेश्च युक्तत्वं सिद्धमेव ।

सौलभ्यस्य सुलभसाधनेष्वनादरहेतुत्वं तदनादरणस्य सुलभसाधने केवलासाधनत्वबुद्धिजनकत्वं च दर्शितं स्कान्दे पुराणे । तत्र केनाचिद्राज्ञा जलदानमवश्यं कार्यमिति श्रीवसिष्ठादिभिर्बोधितेनापि तज्जलदानाकरण-पूर्वकमुक्तेन ‘ यज्जलं सर्वतो लभ्यं तद्दाने किं फलं भवेत् ’ इति वचनेन लघुसाधनेषु जातारुचिस्तल्लघुसाधनेष्वनादरणमसाधनत्वभ्रान्तिं तेषु प्रवृत्त्य-भावं च जनयतीत्यर्थो दर्शितः । विस्पष्टं दर्शितश्चायमर्थः श्रीमद्भागवते दशमस्कन्धे । तत्र कदाचित्सूर्योपरागसमये श्रीकृष्णस्य निकटे समुपविष्टा नारदादयो महर्षयः ‘ नमो वः सर्वदेवेभ्य ऋषयः श्रोतुमर्हथ । कर्मणा कर्मनीहारो यथा स्यान्नस्तदुच्यताम् ’ इति वसुदेवेन पृष्टाः किमयं स्वाधीनं सर्वज्ञमीश्वरमपहायास्मान्पृच्छतीत्याश्चर्याविष्टा आसन् । तान्प्रत्युक्तं ‘ नातिचित्रमिदं विप्रा वसुदेवो बुभुत्सया । कृष्णं मत्वार्भकं यन्नः पृच्छति श्रेय आत्मनः ॥ संनिकर्षो हि मर्त्यानामनादरणकारणम् । गङ्गां हित्वा यथान्याम्भस्तत्रत्यो याति शुद्धये ॥ ’ इति नारदवाक्यसंदर्भे अनुपमसुकृत-शालिनोऽपि वसुदेवस्य नित्यसिद्धसर्वेश्वरत्वसर्वज्ञत्वाद्यनन्तकल्याणगुणाकरे श्रीकृष्णे अनीश्वरत्वासर्वज्ञत्वव्याप्यार्भकत्वबुद्धिरनादरणशब्दितपरिभवश्च संनिकर्षवशादभवदिति तथा गङ्गातीरस्थमनुष्याणां संनिकर्षवशादनादरण-शब्दितपरिभवो निरुपमपावनपटीयसि गङ्गाम्भसि सकलतीर्थवरेभ्यो गरी-यसि सामान्यतीर्थापेक्षयापि निकृष्टत्वबुद्धिर्जायते मनुष्याणामेष स्वभाव इति चार्थो दर्शित इति वसुदेवादीनां तद्भगवदुपेक्षया गङ्गातीरस्थानां तद्गङ्गोपेक्षया च सकलमनुष्याणां सर्वत्र सदात्यन्तसंनिकृष्टे भगवन्नाम्नि तत्संनिकर्षवशाद्बहूनां नराणां तन्नाम्नि हि परिभवः, स्वतन्त्रतया साधन-त्वाभावभ्रान्तिश्च स्यादेवेत्यर्थः कैमुतिकन्यायसिद्ध एव । तथा चैतद्भागवत-

संदर्भेण दृश्यमानस्य भगवन्नाम्न्यसाधनत्वभ्रमस्य परिभवस्य प्रवृत्त्यभावस्य चात्यन्तसंनिकर्ष एव हेतुरिति दर्शितं भवति । एवं च 'स्वनेदिष्ठं तीर्थं जगति समकालः कवयिता निजस्त्रीलावण्यं निजभवनसीमौषधिलता । जगत्ख्यातो मन्त्रः सकलसुलभो निष्कृतिविधिर्न गण्यन्ते लोकैरतिपरिचयाल्पीकृतगुणैः ॥' इत्यभियुक्तवचनम्, तथा 'प्रथमदिवसचन्द्रः सर्वलोकैकपूज्यः स तु सकलकलाभिः पूर्णबिम्बोऽपि नार्हः । अतिपरिचयदोषः कस्य नो हन्ति मानं नवनवगुणरागी प्रायशः सर्वलोकः ॥' इत्यभियुक्तवचनम्, तथा 'अतिपरिचयादवज्ञा संततगमनादनादरो भवति । मलये भिल्लपुरंध्री चन्दनतरुकाष्ठमिन्धनं कुरुते ॥' इत्यभियुक्तवचनं चानुसृतं भवति । यदप्युक्तं सर्वत्रायासाधिक्यात्फलाधिक्यकल्पनं मीमांसकैरवगमितमिति तदत्यन्तभ्रान्तिमूलकमेव, सर्वत्र तत्कल्पनस्य पूर्वमीमांसकानामुत्तरमीमांसकानां चाभिमतविरुद्धत्वात् । 'दध्ना जुहोति' इति श्रुत्या क्रत्वङ्गत्वेन क्रतूपकारार्थैव दधिस्वीकारायासापेक्षया 'दध्नेन्द्रियकामस्य जुहुयात्' इति श्रुत्येन्द्रियलक्षणफलसाधनतयार्थात्क्रतूपकाराय च दधिस्वीकारे आयासाधिक्यलेशस्याप्यभावेऽपि क्रतूपकाररूपफलापेक्षयाधिकस्येन्द्रियलक्षणफलस्य पूर्वमीमांसकैरङ्गीकृतत्वेन, तथा 'चमसेनापः प्रणयेत्' 'गोदोहनेन पशुकामस्य' इत्यत्र फलार्थं गोदोहनस्वीकारे आयासाधिक्यगन्धस्याप्यभावेऽपि क्रतूपकाररूपफलस्य पशुलक्षणफलस्य चेति फलद्वयस्याप्यङ्गीकृतत्वेन, तथा 'खादिरो यूपो भवति' 'खादिरं वीर्यकामस्य' इत्यत्र फलसाधकत्वेन खादिरत्वोपादानेऽप्यायासाधिक्यलेशस्याप्यभावेऽपि क्रतूपकाररूपफलस्य वीर्यलक्षणफलस्य चेति फलद्वयस्याङ्गीकारेण, तथा द्वादशाध्यायचतुर्थपादे 'सत्रे गृहपतिरसंयोगाद्धौत्रवत्' इत्यधिकरणे, गृहपतेः फलभूयस्त्वमञ्जनादि फलिसंस्कारात्मककर्माधिक्यादिति पूर्वपक्षं प्रापय्य सिद्धान्ते तु फलिसंस्काररूपकर्माणि सत्रफलभोक्तृभिः सर्वैरपि कार्याणि गृहपतेः फलभूयस्त्वं तु 'यो वै सत्रे

बहूनां यजमानानां गृहपतिः सत्रस्य प्रत्येता स हि भूयिष्ठामृद्धिमाप्नोति' इति वचनबलाद्भवति न संस्काराधिक्यादित्युक्त्या अध्वर्य्वाद्यपेक्षया गृहपतेरायासाल्पत्वेऽपि तदध्वर्य्वाद्यपेक्षया गृहपतेः फलभूयस्त्वाङ्गीकारेण च सर्वत्रायासानुसारेण फलकल्पनं मीमांसकैरङ्गीकृतविरुद्धमेवेत्यर्थस्य विस्पष्टत्वात्। अत्रायासाभावेऽपि वचनोक्तफलाङ्गीकारे, तथा अग्निहोत्र-दर्शपूर्णमासादावायासाधिक्यात्स्वर्गरूपफलाधिक्यकल्पने, तथा अल्पाया-सवतो गृहपतेरधिकफलाङ्गीकारे, तथा मीमांसकानां 'न हि वाचनिकार्थे न्यायः प्रवर्तते' इति प्रवादे, तथा 'न हि वचनस्यातिभारोऽस्ति' इति प्रवादे, तथा 'किं हि वचनं न कुर्यात्' इति प्रवादे च।

पर्यालोच्य हि यत्र वचनविरोधाभावस्तत्रैव लौकिकन्यायानां प्रवृत्तिः इति सकललोकरीत्या आयासतारतम्येन फलतारतम्यं कल्प-नीयम्। यत्र वचनस्य फलाभिधाने तात्पर्यं तत्र वाचनिकं फलमवश्यमङ्गीकर्त-व्यं वाचनिकार्थे लौकिकन्यायानां प्रवृत्त्यभावादिति मीमांसकानामाशयोऽ-वधीर्यते, अन्यथाग्निहोत्रदर्शपूर्णमासादावायासतारतम्येन फलकल्पनस्य 'दध्नेन्द्रियकामस्य जुहुयात्' इत्यादावायासाधिक्यं विनैवाधिकफलाङ्गी-कारस्य च परस्परविरोधाङ्गीकारापत्तेः, 'न हि वाचनिकार्थे न्यायः प्रवर्तते' इत्युदाहृतप्रवादत्रयस्याप्यनृतत्वापत्तेश्च। सुप्रसिद्धमेव लोके क्वचिदाया-साधिक्ये फलाधिक्यं क्वचिदायाससाम्ये फलाधिक्यं क्वचिदायासस्याल्पत्वेऽ-पि फलाधिक्यं च। तथा हि—कश्चन भूप्रदेशविशेषः करीषपत्रादिप्रक्षेप-रूपायासं विना यावत्फलति स एव भूप्रदेशविशेषः करीषपत्रादिप्रक्षेप-रूपायासाधिक्येऽधिकफलो दृश्यते। एवमीषत्सारवद्भूमिर्यावत्फलति समानेऽपि पुरुषायासेऽत्यन्तसारवद्भूमावधिकफलं दृश्यते। एवमत्यन्तसार-वद्भूमिरत्यन्तायासं विनैव यावत्फलति ऊषरभूमिर्बहुकरीषप्रक्षेपादिरूपात्य-न्तायासेनापि तावन्न फलति, किंतु तन्न्यूनमेव फलं तत्र दृश्यते। एवमेक-

भूप्रदेशे यावत्फलं तत्समानसारवति तद्द्विगुणभूप्रदेशे तद्द्विगुणं फलं दृश्यते । एवमत्यन्तसारवति भूप्रदेशे यावत्फलं दृश्यते तद्वत्साररहिते तद्द्विगुणेऽप्यूषरभूप्रदेशे ततो न्यूनमेव फलं दृश्यते । एवं गजशिरःपरिमितं समीचीनदृढपाषाणं योजनपर्यन्तं नीत्वा विक्रेतुर्यावत्फलं दृश्यते कपित्थफलपरिमितं समीचीनं दीपवत्प्रकाशमानं माणिक्यं योजनपर्यन्तं नीत्वा विक्रेतुस्ततोऽयुतगुणं लक्षगुणं ततोऽप्यधिकं च फलं विज्ञायते । तथा च लोके क्वचिदायासाधिक्यात्फलाधिक्यं तथा क्वचिदायाससाम्येऽपि फलाधिक्यं क्वचिदायासस्यात्यन्ताल्पत्वेऽपि फलाधिक्यं च सिद्धमेव । अत एव मीमांसकैरपि अग्निहोत्रदर्शपूर्णमासज्योतिष्टोमादावायासाधिक्यात्फलाधिक्यं कल्पितम् । दधिगोदोहनखादिरत्वादिष्वायाससाम्येऽप्यायासाल्पत्वेऽपि फलाधिक्यमङ्गीकृतम् ।

उत्तरमीमांसाकारैर्भगवत्पादैस्तु भगवद्गीतासप्तमाध्याये 'अन्तवत्तु फलं तेषां तद्भवत्यल्पमेधसाम् । देवान्देवयजो यान्ति मद्भक्ता यान्ति मामपि ॥' इति वचनभाष्ये 'समानेऽप्यायासे मामेव न भजन्तेऽनन्तफलायाहो खलु कष्टं वर्तत इत्यनुक्रोशं दर्शयति भगवान्' इत्युक्तम् । तद्भाष्ये समानेऽप्यायासे देवतान्तरभजनपराणामन्तवत्फलं भगवद्भजनपराणां मुक्तिरूपमनन्तफलं च कण्ठरवेणोक्तम् । नवमाध्याये 'यान्ति देवव्रता देवान्पितॄन्यान्ति पितृव्रताः । भूतानि यान्ति भूतेज्या यान्ति मद्याजिनोऽपि माम् ॥' इति वचनतात्पर्याभिधायके 'समानेऽप्यायासे मामेव न भजन्तेऽज्ञानात् तेन तेऽल्पफलभाजो भवन्तीत्यर्थः, न केवलं मद्भक्तानामनावृत्तिलक्षणमनन्तफलं किं तु सुखाराधनश्चाहम् कथं पत्रं पुष्पं फलं तोयमित्युक्तम् ?' तत्रावतारिकारूपभाष्ये देवतान्तरभजनस्यात्यन्तायाससाध्यस्याल्पफलम् अनायाससाध्यस्य भगवद्भजनस्य मुक्तिरूपमनन्तफलं च विस्पष्टं दर्शितम् । बृहदारण्यकोपनिषत्पञ्चमाध्याये—'अथ संपदः' इत्यारभ्य

बहुविधसंपदुपासनाभिधायकश्रुतेर्व्याख्यानरूपे। अथ संपद उच्यन्ते-संपन्नाम केनचित्सामान्येनाग्निहोत्रादीनां कर्मणां फलवतां कर्तुस्तत्फलाय संपादनं संपत् । फलस्यैव सर्वोत्साहेन फलसाधनानुष्ठाने प्रयतमानानां केनचिद्वैगुण्येनासंभवस्तदानीमाहिताग्निः सन्किंचित्कर्माग्निहोत्रादीनां यथा संभवमादायालम्बनीकृत्य कर्मफलनिर्वृत्तायां सत्यां यत्कर्मफलकामो भवति तदेव संपादयति, अन्यथा राजसूयाश्वमेधपुरुषमेधसर्वमेधलक्षणानामधिकृतानां त्रैवर्णिकानामपि केषांचिदसंभवात्तेषां तत्पाठः स्वाध्यायार्थः केवलः स्यात् । यदि तत्फलप्राप्त्युपायः कश्चन न स्यात् तस्मात्तेषां संपदेव तत्फलप्राप्तिः ; तस्मात्संपदामपि फलवत्त्वम् अतः संपद आरभ्यन्ते इत्यादिभाष्ये तद्भाष्यव्याख्यानरूपे ' फलवत्कर्मणां क्वापि किंचित्सामान्यसंश्रयात् । संपत्तिर्महतां संपदल्पीयः कर्मसूच्यते । यदि वाक्यफलस्यैव किंचित्सामान्यवर्त्मना । संपादनं भवेत्संपदग्निहोत्रादिकर्मणि ॥ संपदा चेत्फलप्राप्तिरग्निहोत्रादिकर्मणाम् । त्रयाणामपि वर्णानां तत्पाठः फलवान्भवेत् ॥ नातिभारोऽस्ति नो बुद्धेः शास्त्रं चेत्परमं भवेत् । विदुषां श्रेयसे तेऽध्वा न क्वचित्प्रतिहन्यते ॥ ' इत्यादिवार्त्तिके च । अल्पायाससाध्येनाग्निहोत्रादिकर्मणात्यन्तमहायाससाध्याश्वमेधादिरूपमहाक्रतुफलं स्यादित्यर्थः कण्ठरवेणोक्तः । अन्याश्च संपदुपासना अत्यन्तमहायाससाध्या देवलोकादिफलप्रदा बह्व्यः प्रतिपादिताः । अत्र वार्त्तिके ' नातिभारोऽस्ति– ' इति वार्त्तिकश्लोकस्यायमर्थः—शास्त्रं तत्परं संपदुपासनस्याश्वमेधादिफलसाधनत्वाभिधानपरं भवेच्चेत् नः अस्माकं चतुर्मुखब्रह्मणोऽवताररूपाणां सर्वज्ञशिखामणीनां वार्त्तिकाचार्याणां बुद्धेरुक्तसाध्यसाधनभावाङ्गीकारे अतिभारः अत्यन्तदृढशङ्कारूपभारो नास्त्येव । किं तु क्वचिन्मीमांसकैरायासानुसारेण फलं न्यायैः कल्पितमतोऽत्रापि तथा कल्पनीयमिति मन्दाशङ्कारूपाल्पभारोऽस्ति, स चाल्पभारः शास्त्रतात्पर्यार्थे न्यायानां प्रवृत्त्यभावेन निराकृत इति तन्निराकरणस्य ' शास्त्रं चेत्तत्परं भवेत् ' इत्यनेन दर्शितत्वादिति

8

भावः । अतः शास्त्रतात्पर्यार्थाङ्गीकारे ब्रह्मणोऽवताररूपाणामस्माकं शङ्कारूपभाराभावादेव विदुषां समीचीनज्ञानवतां श्रेयसे अल्पायासलभ्य महाश्रेयसे अध्वा उक्तसंपदुपासनारूपमार्गः क्वचिदपि न प्रतिहन्यते। मीमांसकैः क्वचिदायासानुसारेण फलमुक्तमिति तन्न्यायैरयं संपदुपासनारूपमार्गः श्रुतितात्पर्यसिद्धत्वान्न बाध्यते इति भावः । तथा च समानायासस्थलेऽन्यतरसाधनस्य अधिकफलाभिधानकशास्त्रं तथा आयासावहसाधनफलापेक्षया लघुसाधनस्याधिकफलाभिधायकशास्त्रं चोपमृद्य सर्वत्रायासानुसारेण फलकल्पनपक्षस्य सकलपूर्वमीमांसकमतविरुद्धत्वं सकलोत्तरमीमांसकमतविरुद्धत्वं च विस्पष्टम् ।

यदप्युक्तं गुरुपापे गुरु प्रायश्चित्तं लघुपापे लघु प्रायश्चित्तमिति प्रायश्चित्तायासानुसारेण निबन्धनेषु व्यवस्थापितमिति तत्किं वचनैरेव गुरुपापे गुरु प्रायश्चित्तं लघुपापे लघु प्रायश्चित्तं चोक्तम् अतस्तद्वचनस्वारस्यानुसारेणैव व्यवस्थापितमित्युच्यते, अथवा तात्पर्येणैव प्रवृत्तवचनस्वारस्यं क्वचिन्न्यायैरुपमृद्य प्रायश्चित्तानामायासतारतम्यानुसारेण व्यवस्थापितमित्युच्यते, तत्राद्यपक्षे तावदिष्टापत्तिः तात्पर्येण प्रवृत्तवचनानां स्वारस्यानुसारेण व्यवस्थापनस्य पूर्वोत्तरमीमांसकानां सर्वेषामभिमतत्वेन तदर्थाङ्गीकारस्यावश्यकत्वात्; द्वितीयपक्षस्तु श्रीमद्विद्यारण्यचरणैर्बृहन्माधवीयाख्यनिबन्धनस्यादौ सम्यङ्निराकृतः । उक्तं च तत्रैव माधवीये—'सर्वथापि त्वया प्रोक्तां निर्मूलां बुद्धिकल्पिताम् । कामाकामादिभेदेन नाङ्गीकुर्मो व्यवस्थितिम् ॥ वचनेष्वेव कामादिव्यवस्था लभ्यते यदि । सुखेनाभ्युपगच्छामो वाक्यैकशरणा वयम् ॥' इति । कामकृतपापे महत्प्रायश्चित्तमकामकृतपापेऽल्पप्रायश्चित्तमित्यर्थः । प्रायश्चित्तयोरल्पत्वं महत्त्वं चानायासमहायासकृतमित्येतत्पूर्वपक्षे विवक्षितमित्यर्थो दर्शितस्तत्रैव माधवीये 'इदमल्पं महच्चेदमिति ते किं नियामकम् । अनायासमहायासौ यद्यल्पत्वमहत्त्वयोः । हेतु-

महाव्रतास्तर्हि भवेयुः कर्षकादयः ॥' इति । स्मृतिव्याख्यातृभिः कृतव्यवस्थायाः प्रयोजनमुक्तं तत्रैव माधवीये 'स्मृतिव्याख्यातृभिः सर्वैर्वचनानां व्यवस्थितिम् । ब्रुवाणैर्मन्दमतयो व्युत्पाद्यन्ते हि केवलम् ॥' इति । केवलं मन्दमतिव्युत्पत्त्यर्थमेव सा व्यवस्था न प्रामाणिकीति भावः । तद्व्यवस्थाया अप्रामाणिकत्वे हेतुरुक्तस्तत्रैव माधवीये 'कल्पिता मानुषी बुद्धिः सा च न व्यवतिष्ठते । अत एव निबन्धेषु दृश्यते नैकवाक्यता ॥' इति । हेत्वन्तराणि चोक्तानि 'देशभेदात्कालभेदात्पुंभेदादन्यथान्यथा । विपर्यस्यति शास्त्रार्थ इति पूर्वमवादिषम् ॥' इति । देशभेदादित्यस्य 'अयोध्या मथुरा माया काशी काञ्ची अवन्तिका । पुरी द्वारवती सेतुबन्धो रामेश्वरश्च सः ॥' इति इत्यादिषु महापुण्यक्षेत्रेषु अन्येषु सामान्यभूप्रदेशेषु च कृतजपदानवासादीनामायाससाम्ये समानपुण्याङ्गीकारापत्तेः, गङ्गागोदावरीकृष्णवेणीकावेरीधनुष्कोट्यादिमहातीर्थेषु सामान्यतीर्थेषु च कृतस्नानतर्पणादीनामायाससाम्ये समानपुण्याङ्गीकारापत्तेः, तत्क्षेत्राणां तत्तीर्थानां च महामाहात्म्यबोधकानां श्रुतिपुराणस्मृत्यादीनां तच्छ्रुतिपुराणाद्यनुसारेण कृतानामभियुक्ताचाराणां चाप्रामाण्याङ्गीकारापत्तेः प्रणवगायत्रीनारायणाष्टाक्षरशैवपञ्चाक्षर्यादिमहामन्त्राणां जपस्य भाषामन्त्राणां जपस्य चायाससाम्ये फलसाम्याङ्गीकारापत्तेश्चेति भावः। कालभेदादित्यस्य अर्धोदयमहोदयसूर्योपरागसोमोपरागादिमहापुण्यकालेषु सामान्यकालेषु कृतानां स्नानदानजपहोमादीनां सकलपुण्यकर्मणामायाससाम्याङ्गीकारापत्तेः, अर्धोदयादिकालेषु कृतकर्मणां महाफलसाधनत्वाभिधायकशास्त्राणां तथा तच्छास्त्रप्रामाण्याङ्गीकारपूर्वकं प्रवृत्तशिष्टाचाराणां चाप्रामाण्याङ्गीकारापत्तेश्चेति भावः पुंभेदादित्यस्य वसिष्ठसदृशमहाश्रोत्रियेभ्यः सनकादिसदृशब्रह्मनिष्ठेभ्यश्च दत्तदानस्य व्रात्यभिन्नसामान्यब्राह्मणेभ्यो दत्तदानस्य च आयाससाम्ये फलसाम्याङ्गीकारापत्तेः, महाश्रोत्रियेभ्यो दत्तदानस्य महाफलसाधनत्वाभिधायकश्रुतिस्मृत्यादिशास्त्रस्य तथा तच्छास्त्रानुसारेण प्रवृत्तशिष्टाचाराणां

चाप्रामाण्याङ्गीकारापत्तेः परमहंसमहामुनिभ्यो ब्रह्मनिष्ठेभ्यः क्षुधितेभ्यो दत्तान्नदानस्य व्रात्यभिन्नब्रह्मचारिभ्यः क्षुधितेभ्यो दत्तान्नदानस्य चायाससाम्ये फलसाम्याङ्गीकारापत्तेः 'अनुपनीतशतमेकमेकेनोपनीतेन तत्समम्। उपनीतशतमेकमेकेन गृहस्थेन तत्समम् । गृहस्थशतमेकमेकेन वानप्रस्थेन तत्समम् । वानप्रस्थशतमेकमेकेन यतिना तत्समम् ॥' इति नृसिंहतापिनीश्रुतेः । तथा तच्छ्रुत्यनुसारेण प्रवृत्तशिष्टाचारस्य चाप्रामाण्याङ्गीकारापत्तेश्चेति भावः । तत्र देशभेदात्कालभेदात्पुंभेदादिति हेतुत्रयाभिधानस्यार्थं भावः– उक्तरीत्या बहुश्रुत्यादिशास्त्रसंदर्भाणामुपरोधाङ्गीकारे न्यायसाम्यात्सकलवेदशास्त्राणामुपरोधापत्तेरिति ।

तर्हि शास्त्रार्थः कथं निर्णेतव्य इत्याकाङ्क्षायामुक्तं तत्रैव 'शृणु निर्णयमत्र त्वं स्वतःप्रामाण्यवादिनः । प्रतीतेऽर्थेऽखिलं शास्त्रं प्रमाणं बाधया विना ॥' इति । तत्रैव स्थलान्तरेऽप्युक्तम् 'अथापास्यार्थवादांश्च विधिवाक्येषु यद्यथा । प्रतीतं तत्तथा ग्राह्यं बाधं वाचनिकं विना ॥' इति । मीमांसाविरोधशङ्कायामुक्तं तत्रैव स्थलान्तरे 'मीमांसकत्वमेतत्स्याद्व्याख्यानुसरणेन यत् । व्यवस्थापनमन्यत्तु पाण्डित्यख्यापनं परम् ॥' इति । अन्यान्यपि बहूनि दूषणान्युक्तानि माधवीये । तान्यत्र ग्रन्थाविस्तृतत्वभिया न दर्शितानि । युक्तमेवेदं तात्पर्येण प्रवृत्तवचनस्वारस्योपमर्दनपूर्वकमायासानुसारेण कृतव्यवस्थाया दुष्टत्वम् । सकलपूर्वोत्तरमीमांसकमतविरुद्धताया दर्शितत्वात् । अतः सिद्धमेव नामकीर्तनस्य वचनैस्तात्पर्येणोक्तफलाङ्गीकारस्य तथा स्वल्पजनानामेव नामकीर्तनरूपलघुधर्मे दृश्यमानप्रवृत्तेर्बहूनां गुरुधर्मेषु दृश्यमानप्रवृत्तेश्चोपपन्नत्वम् ।

ननु प्रागाचरितकर्मजनितवासनावशात्तत्कर्मणि रुचिर्जायते, तद्रुचिवशात्तस्मिन्नेव कर्मणि प्रवर्तत इत्यर्थः । तस्मिन्नर्थे 'तेषां ये यानि कर्माणि' इत्यादिसंदर्भरूपप्रमाणप्रदर्शनपूर्वकं सम्यगुपपादितः । अत एव पूर्व-

जन्मनि कृतनामकीर्तनजनितवासनावशात्तदधीना नामकीर्तने रुचिः तद्रुचि-वशान्नामकीर्तने प्रवृत्तिश्च जातेत्यङ्गीकर्तव्यम् । तदङ्गीकारे सकृन्नामकीर्त-नस्य मुक्तिसाधनत्वाभावः सिद्ध एव, पूर्वजन्मनि कृतनामकीर्तने मुक्ति-साधनत्वाभावाङ्गीकारस्यावश्यिकत्वात् । किं च अस्मिञ्जन्मनि नामकीर्तन-पराणां पूर्वजन्मनि नामकीर्तनपरत्वं वक्तव्यम्, पूर्वजन्मनि नामकीर्तन-प्रवृत्तिसिद्ध्ये ततः पूर्वजन्मनि नामकीर्तनपरत्वं कल्पनीयम्, तत्पूर्व-जन्मनि नामकीर्तनप्रवृत्तये ततः पूर्वजन्मनि नामकीर्तनपरत्वं कल्पनीय-मित्यधुना ये नामकीर्तनपरा दृश्यन्ते ते ह्यनादिकालमारभ्यानेक-कोटिब्रह्मकल्पेषु धृतानन्तकोटिशरीरेषु नामकीर्तनपरा एवेत्यवश्यं कल्प-नीयम् । अन्यथा नामकीर्तने प्रवृत्तिसिद्ध्यभावापत्तेः । तथा चावृत्त-नामकीर्तनस्यापि श्रेयःसामान्यं प्रत्यसाधनत्वं सिध्यति । अतः कोटि-शरीरेषु बहुधावृत्तनामकीर्तनस्यासाधनत्वे एकस्मिञ्जन्मनि आवृत्तनाम-कीर्तनस्यासाधनतायाः कैमुतिकन्यायसिद्धत्वादिति चेत् नामकीर्तने प्रवृत्ते-रिव सकलधर्मप्रवृत्तेरुपपादनीयतायाः समानत्वेन नामकीर्तनप्रवृत्तिसिद्ध्ये नामकीर्तनस्यापादितानवस्थायाः सकलधर्मेषु प्रवृत्तिसिद्ध्ये सकलधर्माणां त्वदुक्तानवस्थापत्त्या सकलधर्माणामसाधनत्वापत्त्या कृत्स्नस्यापि शास्त्रस्या-प्रामाण्यापत्तेः । वस्तुतस्तु कस्यापि शास्त्रोक्तसाधनस्य त्वदुक्तानवस्था-गन्धस्यापि नावकाशः ।

तथा हि—' तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन तपसानाशकेन ' इति श्रुत्या यज्ञादिभिर्जातमहापुण्येन तत्त्वज्ञाना-पेक्षया विजातीयेन तत्त्वज्ञाने प्रवृत्तिर्दर्शिता । एवं विजातीयसुकृतवशा-ज्ज्ञाने प्रवृत्तिप्रदर्शनदृष्टान्तेनैव सकलधर्मेष्वनवस्थावारणाय तेषु विजातीय-धर्मैरपि प्रवृत्तिकल्पनं युक्तमेव, ज्ञान इव नामकीर्तने विजातीयसुकृतं प्रवृत्त्युत्पादकमित्यर्थप्रतिपादकवचनानि बहूनि दृश्यन्ते । तत्र श्रीमद्भागवते

'अहो बत श्वपचोऽतो गरीयान्यज्जिह्वाग्रे वर्तते नाम तुभ्यम् । तेपुस्तपस्ते जुहुवुः सस्नुरार्या ब्रह्मानूचुर्नाम गृह्णन्ति ये वै ॥' इति वचनेन ये भगवन्नाम गृह्णन्ति ते पूर्वं तपः तेपुः कृतवन्तः जुहुवुः सर्वं होमं कृतवन्तः सस्नुः सकलतीर्थेषु स्नानं कृतवन्त आर्याः सकलस्वधर्माचरणं कृतवन्तः ब्रह्मानूचुः सकलवेदाध्ययनं कृतवन्त इति त्वन्नामग्रहणमहाभाग्योदयरूपलिङ्गेनानुमातुं शक्यते इतितात्पर्यकेण नामकीर्तनादितरधर्मैरेव नामकीर्तने प्रवृत्तिर्दर्शिता । तथा वामनपुराणे 'अश्वमेधादिभिर्यज्ञैर्नरमेधैस्तथैव च । याजितं तेन येनोक्तं हरिरित्यक्षरद्वयम् ॥' इति वचनेन अश्वमेधादिसकलयज्ञैर्नामकीर्तनप्रवृत्तिर्दर्शिता । तथा श्रीविष्णुधर्मे 'वाराणस्यां कुरुक्षेत्रे नैमिशे पुष्करे तथा । तद्गतं तेन येनोक्तं हरिरित्यक्षरद्वयम् ॥ ऋग्वेदो हि यजुर्वेदः सामवेदोऽप्यथर्वणः । अधीतास्तेन येनोक्तं हरिरित्यक्षरद्वयम् ॥ अश्वमेधादिभिर्यज्ञैर्नरमेधैः सदक्षिणैः । याजितं तेन येनोक्तं हरिरित्यक्षरद्वयम् ॥ गवां कोटिसहस्राणि कन्यानामयुतानि च । दत्तानि तानि येनोक्तं हरिरित्यक्षरद्वयम् ॥' इति वचनैः वाराणस्यादिक्षेत्रवासेन ऋग्वेदादिसकलवेदाध्ययनेन अश्वमेधादिसकलयज्ञैर्यजनेन बहुसहस्रकोटिगोदानादिना च यः सुमहान्सुकृतनिचयस्तेन नामकीर्तने प्रवृत्तिरित्यर्थः सम्यग्दर्शितः । एवं शिवरहस्ये 'अनेकजन्मभिर्नित्यं पुण्यं बहु कृतं यदि । तदा शिवेति शब्दोऽयं सादरं निःसरिष्यति ॥ इति वचनेन बहुजन्मसु दिने दिने स्वधर्माचरणैः सकलवेदाध्ययनैर्महातपश्चरणैः काश्यादिमहाक्षेत्रवासैः गङ्गादिसकलतीर्थस्नानैश्च महासुकृतराशिं यः संपादयति तदा जगदीश्वरस्य नामादरो जायत इत्यर्थो दर्शितः । तथा चैवं बहुजन्मसु संपादितमहासुकृतशालिनः य इह जन्मनि पूर्वजन्मनि वा ततः पूर्वजन्मनि वा केनचित्क्रियमाणं नामकीर्तनं शृणुयाद्वा अवशादिना नामकीर्तनं कुर्याद्वा तदवशनामकीर्तनादिना नामकीर्तनवासनोत्पत्तिः स्यात् तद्वासनावशान्नामकीर्तने रुचिः स्यात् तद्रुचिवशान्नामकीर्तने परिदृश्यमाना श्रद्धा प्रवृत्तिश्चोपपन्नैवेति त्वदुक्तानवस्थाशङ्कागन्ध-

स्यापि नावकाशः । तथा च स्वल्पानामेव विदुषामविदुषां च नामकीर्तने परिदृश्यमानायाः श्रद्धायाः प्रवृत्तेश्च, तथा विदुषामविदुषां च बहूनां नामकीर्तनमपहायान्यत्र परिदृश्यमानायाः श्रद्धायाः प्रवृत्तेश्च कारणं दर्शितम् । अनुपदमुक्तसकलसुकृतशालिनो भगवन्नाम्नि प्रवृत्तिः तत्र किंचिन्न्यूनसुकृतशालिनोऽन्यत्र प्रवृत्तिरित्यर्थस्य दर्शितवचनैः सम्यग्ज्ञातुं शक्यत्वात् । ननु सकलजनानां सकृदवशनामकीर्तनस्य सकलफलहेतुत्वाङ्गीकारे तन्नामकीर्तनभिन्नानां सकलाभ्युदयनिःश्रेयससाधनरूपसकलधर्माणां सकलप्रायश्चित्तानां च कदापि फलं नास्त्येवेत्यङ्गीकारापत्तिः । सकृदवशनामकीर्तनेनैव सकलफलस्यापि सिद्धत्वात् । किं च सर्वे धर्मा आचमनपूर्वकं संकल्पपूर्वकमाचरणीया इति आचमनमङ्गरूपाणां तथा संकल्पावयवरूपाणां तथा कृच्छ्रप्रतिनिधितया स्वशाखात्मकस्य वेदस्य पारायणं विहितं तद्वेदावयवरूपाणां तथा स्नानदानहोमाद्यङ्गरूपाणि जप्यमन्त्ररूपाणि च यानि वेदवाक्यानि तद्वेदवाक्यावयवरूपाणां च भगवन्नाम्नामुच्चारणेन सकलफलसिद्ध्यङ्गीकारे कृच्छ्रस्नानदानहोमजपादिसकलधर्माणां फलाभावाङ्गीकारापत्तिः तदवयवरूपभगवन्नाम्नामुच्चारणेनैव पापक्षयरूपस्य वाभ्युदयरूपस्य वा मुक्तिरूपस्य वा सकलफलस्यापि सिद्धत्वादिति चेदुच्यते। यदुक्तं सकृदवशनामकीर्तनेन सकलप्रायश्चित्तानां सकलाभ्युदयसाधनानां मुक्तिसाधनानां च कदापि फलं नास्तीत्यङ्गीकारापत्तिरिति तन्न, सकृदवशनामकीर्तनस्यापि प्रतिबन्धकाभावे मुक्तिहेतुतायाः सिद्धत्वेन ये स्वर्गाद्यनित्यफलं प्राप्तवन्तः ये प्राप्स्यन्ति तेषां सर्वेषां सकृदवशनामकीर्तनमपि नासीन्न भविष्यतीत्यर्थस्य सम्यग्विज्ञातुं शक्यत्वेनान्याङ्गत्वविनिर्मुक्तनामकीर्तनरहितजनान्प्रति सकलप्रायश्चित्तानां सकलाभ्युदयसाधनानां सफलताया अनिवार्यत्वात् ; येषां जनानामत्यन्तायासावहसाधनानुष्ठानेनैव पापक्षयरूपमभ्युदयरूपं मुक्तिरूपं चेति त्रितयान्यतमं फलं प्राप्तुं सुकृतमासीत् अत्यन्तसुखसंपाद्यसाधनेन तत्त्रितयान्यतमं फलं प्राप्तुं सुकृतसंबो

मासीत्तेषां जनानां सुखसंपाद्यं सकृदवशनामकीर्तनं न भवत्येवेत्यर्थस्य सुष्ठु ज्ञातुं शक्यत्वेन ताञ्जनान्प्रति नामकीर्तनभिन्नानां मुक्तित्रितयान्यतमफलसाधनानां सफलतायाः सिद्धत्वाच्च । दर्शितं च सकृदवशनामकीर्तनस्यापि पूर्वसुकृतसाध्यत्वं पुराणेषु । तत्र भागवते षष्ठस्कन्धे ' अथापि मे दुर्भगस्य विबुधोत्तमदर्शने । भवितव्यं मङ्गलेन येनात्मा मे प्रसीदति ॥ अन्यथा म्रियमाणस्य नाशुचेर्वृषलीपतेः । वैकुण्ठनामग्रहणं जिह्वा वक्तुमिहार्हति ॥ क्व चाहं कितवः पापो ब्राह्मणो निरपत्रपः । क्व च नारायणेत्येतद्भगवन्नाम मङ्गलम् ॥' इत्यजामिलवाक्यसंदर्भे । यद्यप्यस्मिञ्जन्मनि महापापमेव कृतवानथापि दुर्भगस्य मे विबुधोत्तमदर्शने तद्दर्शननिमित्तं तद्दर्शनार्थं मङ्गलेन जन्मान्तरसुकृतेन भवितव्यम् । येन विबुधोत्तमदर्शनेनात्र मे प्रसीदति अन्यथा जन्मान्तरसुकृताभावे म्रियमाणस्याशुचेर्वृषलीपतेः गृह्यते वशीक्रियते चित्तं येनेति ग्रहणम् वैकुण्ठनाम इह अस्मिञ्जन्मनि जिह्वा वक्तुं नार्हति । तदेव नार्हतीत्युक्तमर्थं विवृणोति क्व चाहमित्यादिना इत्यर्थके ' अन्यथा म्रियमाजस्य ' इति श्लोके अजामिलकृतसकृदवशनामकीर्तनस्य जन्मान्तरसुकृतसाध्यत्वं सम्यक्प्रतिपादितम् । एवं ब्रह्मोत्तरखण्डे च ' भीता शिव शिवेत्याह केनचित्पुण्यकर्मणा ' इति श्लोकेन काचिद्ब्राह्मणविधवा कस्यचिच्छूद्रस्य भार्यात्वेन स्थिता कदाचित्सुरापानेन मत्ता खड्गेन गोवत्सं हत्वा पश्चाद्विज्ञाय भीता शिव शिवेत्याहेत्यर्थकेन अवशनामकीर्तनमपि महापुण्येनैव साध्यमित्यर्थः स्फुटं प्रतिपादितः। अनुपदमुदाहृतेषु 'वाराणस्यां कुरुक्षत्रे ' इत्यादिविष्णुधर्मवचनेषु सकृत्कीर्तनस्य सकलसुकृतसाध्यत्वं प्रतिपादितम्। तत्रत्येषु येनोक्तं हरिरित्यक्षरद्वयमिति वाक्येषु 'अक्षरद्वयम्' इत्युक्त्या अक्षरद्वयस्यावृत्तेरनुक्त्या च महासुकृतसाध्यत्वेन तत्रोक्तनामकीर्तनस्य सकृत्कीर्तनताया दर्शितत्वात् । अतः सिद्धमायासरहितेन नामकीर्तनरूपसाधनाचरणेन पापक्षयादिमोक्षान्तफलप्राप्तये येषां महासुकृतं स्यात्तेषामेव सकृन्नामकीर्तनमपि स्यान्नान्येषामिति न कोऽपि विरोधः ।

यत्तूक्तमाचमनादेरङ्गरूपाणां सकलधर्माङ्गभूतवेदवाक्यावयवरूपाणां च नाम्नां कीर्तनेन स्नानदानजपप्राजापत्यकृच्छ्राद्यश्वमेधान्तसकलधर्माणामानर्थक्यापत्तिः स्यादिति तदसत्, अङ्गानामङ्ग्युपकारकत्वरूपफलं विना फलान्तराकाङ्क्षा नास्त्येवेति अङ्गेषु फलश्रवणमस्ति चेदपि अङ्गेषु फलश्रवणमर्थवाद इति च मीमांसकानां प्रवादस्य सुप्रसिद्धत्वेन अवयवानामवयविघटकत्वरूपफलं विना फलान्तराकाङ्क्षाभावस्य कैमुतिकन्यायसिद्धत्वेन आचमनादेरङ्गरूपनाम्नां कीर्तनस्य सकलधर्माङ्गभूतवेदवाक्यावयवरूपनाम्नां कीर्तनस्य च फलाकाङ्क्षायाः प्रसक्त्यभावेन अत एव नाम्नां कीर्तनस्य स्वतन्त्रफलसाधनत्वकल्पनायाः प्रसक्त्यभावेन स्वतः फलकल्पनेनाभावेन च स्वतःफलरहितेन तन्नाम्नां कीर्तनेन सकलधर्मवैफल्यापत्तेरापादनस्य प्रसक्त्यभावात्, यथा वेदवाक्यावयवभूतनाम्नां कीर्तनस्य फलाङ्गीकारे तद्वेदवाक्यानां तद्वेदवाक्याङ्गधर्माणां च फलस्य वैयर्थ्यापत्तिरूपबाधकं स्यात् तथा लौकिकवाक्यानामलौकिकफलहेतुत्वाभावेन तल्लौकिकवाक्यावयवरूपनाम्नां कीर्तनस्य वचनैरुक्तफलाङ्गीकारे न किंचिद्बाधकम्, अन्यथा तद्वचनानामानर्थक्यापत्तेरिति न कोऽपि विरोधः । एवं च विष्णौ रूढनाम्नां सर्वेषां सकलफलसाधनत्वं समानमेव । दर्शितश्चायमर्थो नामसहस्रभाष्ये दर्शितेन ' सर्वार्थशक्तियुक्तस्य देवदेवस्य चक्रिणः । यद्वाभिरोचते नाम तत्सर्वार्थेषु कीर्तयेत् ॥ सर्वार्थसिद्धिमाप्नोति नाम्नामेकार्थता यतः ॥ ' इति विष्णुधर्मवचनेन । अत्र विष्णुनाम्नां सर्वेषां फलसाधनसामर्थ्यसाम्ये हेतुरुक्तस्तत्रैव ' नाम्नामेकार्थता यतः ' इति । अस्यायं भावः—नाम्नां विष्णुवाचकत्वेनैव माहात्म्यं वक्तव्यम् । तथा च विष्णुवाचकनाम्नां मध्ये केषांचिदधिकसामर्थ्यस्य केषांचिन्न्यूनसामर्थ्यस्य च प्रसक्त्यभावादिति । एवं विष्णौ रूढनाम्नां शिवे रूढनाम्नां च फलप्रदानसामर्थ्यं समानमेव । स्फुटमुक्तश्चायमर्थः नामसहस्रभाष्ये दर्शितेन ' आवयोरन्तरं नास्ति शब्दैरर्थैर्जगत्पते । ' इति वचनसमनन्तरं प्रवृत्तेन ' नामानि तव गोविन्द

यानि लोके महान्ति च । तान्येव मम नामानि नात्र कार्या विचारणा ॥ ' इति हरिवंशे कैलासयात्रायां महेश्वरवचनेन । तत्र महेश्वरः स्वस्य विष्णव-भेदाभिधानपूर्वकं ' तान्येव मम नामानि ' इति विष्णुनाम्नामेव स्वनामत्व-निर्धारणकरणेन स्वनाम्नां विष्णुनाम्नां च फलप्रदाने तारतम्याभावं दर्शितवान् । ' अन्यथा तान्येव मम नामानि ' इत्यस्य ' नात्र कार्या विचारणा ' इत्यस्य च वैयर्थ्यापत्तेः । एवं विष्णुनाम्नां सर्वेषां फलप्रदत्व-रूपसामर्थ्यसाम्ये उपपत्तिरूपो यो हेतुरुक्तः स एवोपपत्तिरूपहेतुरत्रापि हरिवंशे विष्णुशिवयोर्नाम्नां फलप्रदत्वसामर्थ्यसाम्ये दर्शितो नामापराधाभि-धायके प्रागुदाहृतपाद्मपुराणसंदर्भे । ' शिवस्य श्रीविष्णोर्य इह गुणनामादि सकलं धिया भिन्नं पश्येत्स खलु हरिनामाहितकरः । ' इति वाक्ये तु विष्णुशिवयोर्नाम्नां फलप्रदानसामर्थ्ये सामर्थ्यं विनोत्कर्षापकर्षाङ्गीकारो नामापराध इत्युक्तितो विष्णौ शिवे च रूढनाम्नां पापक्षयहेतुत्वे सकल-पुरुषार्थहेतुत्वे च सामर्थ्यं समानमेवेत्यर्थसिद्धमेव ।

ननु नामकीर्तनं बहुधर्मवैयर्थ्यापादकं भवतीति तद्बहुधर्मवैयर्थ्या-पेक्षया एकस्यैव नामकीर्तनस्य वैयर्थ्यमेवोचितमिति नामकीर्तनस्य सकल-फलहेतुत्वे शास्त्राणां न तात्पर्यमित्यर्थ एवोचितः, एवं नामकीर्तनादन्यो धर्मः कश्चन बहुधर्माणां वैयर्थ्यशङ्कोत्पादकः प्रसिद्धोऽस्ति चेच्छास्त्रे तद्दृष्टान्तेन नामकीर्तनमाहात्म्येऽपि शास्त्रतात्पर्यं वक्तुं शक्यम् । तद्दृष्टान्ताभावान्न तत्र शास्त्रतात्पर्यमिति सिद्धम् । किं च नामकीर्तनस्य सकलफलसाधनत्वे सकलफलेषु लघुगुरुसाधनत्वविकल्पाङ्गीकारापत्त्या शास्त्रस्य न नाममाहात्म्ये तात्पर्यं वाच्यम् । अत्रापि शास्त्रीयदृष्टान्तोऽस्ति चेन्नाममाहात्म्येऽपि तात्पर्यं वक्तुं शक्यम् । तदभावादेव नाममाहात्म्ये तात्पर्यम् । अपि च लघुगुरुसाधनविकल्पमङ्गीकृत्य गुरुसाधनेष्वननुष्ठानलक्षणाप्रामाण्यवारणाय गुरुसाधनेषु बहुजनानां दृश्यमानप्रवृत्तिमादाय लघुसाधनं विना गुरुषु प्रवृत्त्युपपादनं कृतं तदप्यनुपपन्नम्, अस्मिन्नर्थेऽपि दृष्टप्रवृत्त्याश्रयणा-

भावेऽनुपपद्यमानस्य शास्त्रीयदृष्टान्तस्याभावात् । अतोऽपि न नाममाहात्म्ये शास्त्रतात्पर्यम्, नामकीर्तने साधनत्वनिश्चयाभावादन्यत्र प्रवृत्तिरिति वक्तुं शक्यत्वात् । किं च नाममाहात्म्ये शास्त्रस्य तात्पर्यमस्ति चेच्छास्त्रं नामकीर्तनफलेषु गुरुसाधनानि न वदेदेव नामकीर्तनव्यतिरिक्तलघुसाधने सत्यपि तत्फले गुरुसाधनाभिधायकशास्त्रस्य क्वाप्यदर्शनात् । सकलफलसाधनत्वेन नामकीर्तनमात्रमभिहितं चेत्तत्तत्फलार्थिनामास्तिकानां सर्वेषां तत्र प्रवृत्तिः स्यादेव । विकल्पतया कर्मान्तराभावेनावश्यं कर्तव्येषु नित्यकर्मसु सर्वेषां प्रवृत्तेर्दर्शनादिति चेदुच्यते ।

यदुक्तं बहुधर्मवैयर्थ्यापादकधर्मरूपदृष्टान्ताभावान्न नाममाहात्म्ये शास्त्रतात्पर्यमिति तन्न, ब्रह्मचारिणा कृतसंन्यासरूपदृष्टान्तस्य सत्त्वात् । तथा हि—'यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेत्' इति 'अथ पुनरव्रती वा व्रती वा को वा' इति च श्रुत्या अध्ययनमकृतवतः कृतवतो वा ब्रह्मचारिणोऽपि विहितसंन्यासो नामकीर्तनमिव 'यज्ञोऽध्ययनं दानमिति प्रथमः, तप एव द्वितीयः' इत्यादिच्छान्दोग्यश्रुत्युक्त्या आश्रमत्रयेऽभिहितधर्माणां सर्वेषां वैयर्थ्यशङ्कोत्पादक इत्यर्थस्य सुप्रसिद्धत्वेन त्वत्पक्षे नाममहिमाभिधायकशास्त्राणामिव ब्रह्मचारिणं प्रति मुक्तिसाधनत्वेन संन्यासविधायकश्रुतेः स्वार्थतात्पर्याभावाङ्गीकारापत्तिः । 'ब्रह्मसंस्थोऽमृतत्वमेति' इति च्छान्दोग्यश्रुत्यादिभिर्मुक्तिसाधनत्वेन संन्यासो विहित इति सूत्रकारभाष्यकारवार्त्तिककारादिभिः सिद्धान्तितत्वात्, संन्यासेऽपि ब्रह्मचारिणा कृतसंन्यास एव श्रेष्ठ इति भगवत्पादाचार्यादिभिरुक्तत्वात् । किं च काम्यकर्मभिः प्रायश्चित्तैश्च नामकीर्तनस्य विकल्पितसाधनत्वमेव शास्त्राभिमतमित्यर्थस्य दर्शितत्वेन विकल्पितसाधनानां सर्वेषां पाक्षिकवैयर्थ्यस्यानिवार्यत्वेन नामकीर्तनं सकलवर्णाश्रमेषूक्तकाम्यकर्मणां प्रायश्चित्तानां च प्रसिद्धानां वैयर्थ्यापादकमेव न कृतं तत् जनानामुक्तानित्यकर्मणामपि सदा नामकीर्तनपरेणापि जनेन तत्तद्वर्णाश्रमोक्तनित्यकर्माण्यवश्यं कर्तव्या-

नीत्यर्थस्य नामास्तीति नित्यकर्म न कृतं चेत्तदकरणजनितदोषो नामापराध एव । स च नामापराधः तपःकर्मात्मकप्रायश्चित्तशतैरपि न नश्यती- त्यर्थस्य सम्यग्दर्शितत्वात् । ब्रह्मचारिणो विहितसंन्यासस्तु नैष्ठिकब्रह्मचा- रिगृहस्थवानप्रस्थान्तरयुक्तानित्यकाम्यप्रायश्चितरूपसकलधर्माणां वैयर्थ्या- पादको विज्ञायते । यस्तु ब्रह्मचारी संन्यस्यति तस्य गृहस्थाद्याश्रमत्रयोक्त- धर्मानुष्ठानस्यायुक्तत्वात् । एवमाश्रमत्रयोक्तसकलधर्मवैयर्थ्यापादकसंन्यासे शास्त्रतात्पर्यमस्त्येवेत्यङ्गीकारवत्सकलकाम्यकर्मप्रायश्चित्तानामेव पाक्षिक- वैयर्थ्यापादकनामकीर्तने शास्त्रतात्पर्यमङ्गीकार्यमेवेत्यर्थः कैमुतिकन्याय- सिद्धः ।

ननु विरक्ता एव संन्यासं कुर्वन्ति अन्येषां तत्राधिकाराभावात् । वैराग्यं हि बहुजन्मभिः कृतमहासुकृतसंचयपरिपाकलभ्यमेवेति शास्त्रं वक्ति । अत एव दृढवैराग्येण कृतसंन्यासशालिनो विरला एव दृश्यन्ते । अत एव प्रविरलास्ते संन्यासिनः केचनैव तदाश्रमत्रयोक्तधर्मान्न कुर्वन्ति, बहवस्तु कुर्वन्त्येवेति तैरकरणं न दोष इति चेत्समानमत्रापि नामकीर्तनश्रद्धा- शालिन एव नामकीर्तनं कुर्वन्ति अन्येषां तत्र प्रवृत्तेरसंभावितत्वात् ।

नामकीर्तने श्रद्धा तु बहुजन्मसु कृतमहासुकृतसंचयपरिपाकलभ्यैवेति शास्त्रं वक्ति । अत एव दृढीभूतश्रद्धया नामकीर्तनपरा अत्यन्तविरला एव दृश्यन्ते । अत एव प्रविरला नामकीर्तनपराः केचनैव काम्यकर्माणि प्रायश्चित्तानि च न कुर्वन्ति । बहवस्तु कुर्वन्त्येवेति तैर्नामपरैः काम्यकर्म- प्रायश्चित्ताकरणं न दोष इति समानमित्यर्थस्य विस्पष्टत्वात् । तथा च यावता सुकृतेन वैराग्यं स्यात्तावत्सुकृतेनैव श्रवणकीर्तनादिरूपभजने श्रद्धा स्यादित्यर्थो दर्शितः 'तावत्कर्माणि कुर्वीत न निर्विद्येत यावता । मत्कथा- श्रवणादौ वा श्रद्धा यावन्न जायते ॥' इति भागवतवचनेन । अनेन वच- नेन भगवद्भजनश्रद्धावैराग्ययोर्बहुपुण्यसाध्यत्वं समानमित्यर्थो हि दर्शितः ।

नामकीर्तनं हि सकलभगवद्भजनापेक्षयोत्कृष्टमेवेत्यर्थः प्राग्दर्शित एवेति दृढनामकीर्तनश्रद्धादृढवैराग्योत्पादकसुकृतसंघापेक्षयाधिकसुकृतसंघोत्पन्नैवे - त्यर्थसिद्ध एव । दर्शितश्चायमर्थः प्राक् नामकीर्तनप्रवृत्तेर्महापुण्यसंघसाध्य-त्वप्रदर्शनप्रस्तावे दर्शितैः 'अहो बत श्वपचोऽतो गरीयान्' इति भागवत-वचनादिभिः । अतः सिद्धं संन्यासस्येव नामकीर्तनस्यापि बहुधर्मवैयर्थ्या-पादकत्वं न दोष इति । वस्तुतस्तु यथा 'व्रीहिभिर्यजेत' 'यवैर्यजेत' इत्यादिविकल्पितसाधनानां परस्परवैयर्थ्यस्य सिद्धत्वेऽपि तद्वैयर्थ्यं न दोषाय यथा वा चतुर्णामाश्रमाणां मध्ये ब्रह्मचारिदृष्ट्याश्रमत्रयस्य गृहस्थदृष्ट्याश्रमत्रयस्य संन्यासिदृष्ट्याश्रमत्रयस्य चेति सर्वेषामाश्रमाणां परस्परवैयर्थ्यस्य समानत्वेन तद्वैयर्थ्यं न दोषायेति तथा काम्यधर्मप्रायश्चि-त्तानां नामकीर्तनस्य च वैयर्थ्यं समानमेवेति तद्वैयर्थ्यं न दोषायेति सिद्ध-मेव । यत्तु शास्त्रे क्वापि नामकीर्तनव्यतिरिक्तलघुगुरुसाधनविकल्पस्या-भावान्नामकीर्तनमादाय लघुगुरुसाधनविकल्पे शास्त्रस्य तात्पर्यकल्पनमयुक्त-मित्युक्तं तन्न राजसूयाश्वमेधादिषु येऽधिकारिणोऽनधिकारिणश्चेति तत्सर्व-त्रैवर्णिकानधिकारिकं राजसूयाश्वमेधादिषु फलसाधनमग्निहोत्रविषयकसंप-दुपासनमिति भाष्यकारवार्त्तिककारादिभिरुक्त इत्यर्थः प्राग्दर्शित एवेति तदश्वमेधादिफलेषु अग्निहोत्रविषयकसंपदुपासनरूपलघुसाधनस्य अश्वमेधा-द्यन्यतमरूपगुरुसाधनस्य च विकल्पो दर्शित इत्यर्थस्य त्वत्पक्षेऽपि युक्त-ताया अनिवार्यतया तद्दृष्टान्तेन नामकीर्तनगुरुसाधनयोर्विकल्पस्यापि युक्तत्वात् । किं च 'य एवं विद्वानग्निहोत्रं जुहोति यावदग्निष्टोमेनोपा-प्नोति तावदुपाप्नोति य एवं विद्वान्पौर्णमासीं यजते यावदुक्थ्येनोपाप्नोति तावदुपाप्नोति य एवं विद्वानमावास्यां यजते यावदतिरात्रेणोपाप्नोति तावदुपाप्नोति' इति यजुर्वेदसंदर्भे अग्निष्टोमेन यावत्फलं स्यात्तत्फलेऽग्नि-ष्टोमरूपगुरुसाधनस्य अग्निहोत्रविषयकसंपदुपासनरूपलघुसाधनस्य च विकल्पः । तथा उक्थ्यविषयकसंपदुपासनरूपलघुसाधनमुक्थ्यरूपं गुरु-

साधनं चेति लघुगुरुसाधनविकल्पः । तथा अतिरात्रफले संपदुपासनतया क्रियमाणामावास्यारूपलघुसाधनमतिरात्ररूपगुरुसाधनं चेति लघुगुरुसाधनविकल्पश्च दर्शित इति तत्त्रितयदृष्टान्तेन नामकीर्तनादिस्थलेऽपि लघुगुरुसाधनविकल्पः सूपपन्न एव । ' य एवं विद्वानग्निहोत्रं जुहोति ' इत्यादिश्रुतिःसंपदुपासनप्रतिपादिकेति श्रीमद्विद्यारण्यचरणैर्वेदभाष्ये कण्ठरवेणोक्तम् तद्भाष्यं सम्यग्विशदीकृतं च भगवन्नामभूषणे । ग्रन्थविस्तरभियात्र तत्सर्वं न प्रदर्शितम् ।

एवं भगवद्गीताद्वादशाध्याये तद्भाष्ये तदानन्दगिरीये च ' एवं सततयुक्ता ये भक्तास्त्वां पर्युपासते । ये चाप्यक्षरमव्यक्तं तेषां के योगवित्तमाः ॥ ' इत्यादिना उपासकस्य देहपतनानन्तरं सगुणनिर्गुणोपासनयोर्ज्ञानद्वारा विदेहमुक्तिहेतुत्वमुक्तम् । तत्रैव द्वादशाध्याये ' क्लेशोऽधिकतरस्तेषामव्यक्तासक्तचेतसाम् । अव्यक्ता हि गतिर्दुःखं देहवद्भिरवाप्यते ॥ ' इति वचनेन ' न तु देहवद्भिर्देहाभिमानवद्भिः देहाभिमानत्यागनिमित्तं क्लेशोऽधिकतरमवाप्यते ' इति तद्भाष्येण च सगुणोपासकापेक्षया निर्गुणोपासकस्य देहाभिमानत्यागनिमित्तमधिकक्लेशोऽभिहितः । अतस्तत्क्लेशसाध्यं निर्गुणोपासनं क्लेशसाध्यत्वादेव गुरुसाधनम् । सगुणोपासनं तु लघुसाधनमिति गीतातद्भाष्यादिष्वपि लघुगुरुसाधनयोर्विकल्पो दर्शित इति तद्दृष्टान्तेन । एवं विद्यारण्यचरणैः कृतबृहन्माधवीयाख्यनिबन्धनस्यादौ ब्रह्महत्याप्रायश्चित्तयोः सेतुदर्शनद्वादशाब्दयोर्लघुगुरुसाधनयोर्विकल्पः कण्ठरवेणोक्त इति तद्दृष्टान्तेन तथा नृसिंहाश्रमचरणैरद्वैतदीपिकायाम् ' आ पीठान्मौलिपर्यन्तं पश्यतः पुरुषोत्तमम् । पातकान्यपि नश्यन्ति किं पुनश्चोपपातकम् ॥ ' इति वचनस्य स्वार्थपरत्वं सम्यग्दर्शितम् । तेन भगवन्मूर्तेः सकृद्दर्शनं सकलमहापातकोपपातकप्रायश्चित्तमित्यर्थो दर्शितः । तेन च महापातकोपपातकक्षये भगवद्विग्रहदर्शनरूपलघुसाधनस्य द्वादशा-

च्छ्रादिगुरुप्रायश्चित्तानां च विकल्पो दर्शित इति तद्दृष्टान्तेन च नाम-कीर्तनादिरूपलघुगुरुसाधनविकल्पः सुष्टूपपन्न एव । यत्तु नामकीर्तनरूप-लघुगुरुसाधनमपहाय गुरुसाधनेषु दृश्यमानप्रवृत्तेः शास्त्रीयदृष्टान्ताभावं सिद्धवत्कृत्य तत एव तत्प्रवृत्तेरनुपपन्नत्वमपि सिद्धवत्कृत्य तत्प्रवृत्तेरन्यथा-नयनं कार्यमित्युक्तं तदपि न। तथात्वे संपदुपासनारूपलघुसाधनत्यागपूर्वकं गुरुसाधने दृश्यमानप्रवृत्तेरप्यन्यथानयनापत्तिः स्यादेवेति । तेन सकल-संपदुपासनारूपलघुसाधनानां सगुणोपासनरूपलघुसाधनस्य सेतुदर्शनरूप-लघुसाधनस्य भगवद्विग्रहरूपलघुसाधनस्य च प्रतिपादकशास्त्राणां स्वार्थ-परत्वाभावाङ्गीकारापत्त्या तच्छास्त्राणां स्वार्थपरत्वप्रतिपादकबहुग्रन्थविरो-धाङ्गीकारापत्तेः । तत्र बृहदारण्यकभाष्यं तद्वार्त्तिकं तदानन्दगिरीयं भगवद्गीताभाष्यं तदानन्दगिरीयमन्यानि भगवद्गीताव्याख्यानानि विद्यारण्य-कृतयजुर्वेदभाष्यं बृहन्माधवीयमद्वैतदीपिका चेत्येते ग्रन्थास्तच्छास्त्राणां स्वार्थपरत्वं प्रतिपादयन्तीत्यर्थस्य विस्पष्टत्वात् । यद्येतत्सकलग्रन्थ-प्रामाण्याय दर्शितलघुगुरुसाधनविषये दृश्यमानप्रवृत्तिरङ्गीक्रियते तर्हि तद्दृष्टान्तेन नाममाहात्म्यशास्त्राणां स्वार्थे प्रामाण्याय तथा तच्छास्त्राणि स्वार्थपराण्येवेत्यर्थप्रतिपादकानां सहस्रनामभाष्यनामकौमुदीपुरुषार्थरत्ना-करानन्तदेवीयादिबहुग्रन्थानां प्रामाण्याय च तन्नामकीर्तनरूपलघु-साधनत्यागपूर्वकं गुरुसाधनेषु बहुजनकर्तृकदृश्यमानप्रवृत्तेः प्रागुक्तरुचिवै-चित्र्यादुपपन्नत्वमनिवार्यमेव । किं च लघुगुरुसाधनेषु प्रत्यक्षप्रवृत्ते रुचिवै-चित्र्यादुपपन्नत्वं प्राग्दर्शितमिति प्रमाणसिद्धप्रवृत्तेरुपपन्नत्वेऽपि तत्प्रवृत्त्य-नङ्गीकारो हि मौर्ख्यकृत एव । यदप्युक्तं नाममाहात्म्यशास्त्रस्य स्वार्थ-तात्पर्यमस्ति चेदित्यादिकं तदपि न संपदुपासनादिष्वनुपदं दर्शितलघु-साधनेषु सत्सु तल्लघुसाधनसाध्यफलेष्वनुपदं दर्शितगुरुसाधनान्यभिहितानि शास्त्रे दृश्यन्त एवेति तद्दृष्टान्तसत्त्वेन नामकीर्तनरूपलघुसाधने सत्यपि तत्फलेषु शास्त्रे गुरुसाधनान्यभिहितानीत्यभिधानस्य सुष्टूपपन्नत्वात् ।

शाकं हि समीचीनं स्वादूदकं सकलजनेभ्यो रोचते । जलमिव द्रवद्रव्यमपि अत्यन्तमधुरं क्षीरमत्यन्ताम्लं तक्रं च सकलजनेभ्यो न रोचते किं तु केभ्यश्चिदेव रोचते । शास्त्रीयकर्मस्वपि नित्यकर्म स्वादूदकमिव सकल-जनेभ्यो रोचते । अत एव संध्यावन्दनादिनित्यकर्मभिर्विकल्पेन कर्मान्तरं न शास्त्रेण विहितं दृश्यते नित्यकर्मसदृशमपि मोक्षान्तरपुरुषार्थसाधनीभूत-काम्यकर्मप्रायश्चित्तरूपकर्म च तत्क्षीरमिव तत्तक्रमिव च सकलजनेभ्यो न रोचते । किं तु केभ्यश्चिदेव रोचते । तद्रुच्यनुसारेण लघुगुरुकर्माणि शास्त्रं वक्ति । तथा भगवन्नामकीर्तनरूपपरमधर्मो हि येभ्यो न रोचते तान्प्रति मोक्षान्तपुरुषार्थचतुष्टयसाधनतया गुरूणि काम्यकर्माणि गुरूणि प्राय-श्चित्तानि चोक्तानि शास्त्रे । येभ्यस्तावन्महात्मभ्यो दैवीं प्रकृतिमाश्रितेभ्यो बहुजन्मसु सम्यक्कृतमहासुकृतसंघपरिपाकलब्धेश्वरानुग्रहवशात्सर्वेश्वरस्य भगवतो नामकीर्तनरूपो वेदोक्तसकलधर्माधिकतमः परमो धर्मो रोचते तान्प्रति सकलप्रायश्चित्तत्वेन मोक्षान्तसकलपुरुषार्थसाधनत्वेन च शास्त्रे भगवन्नामकीर्तनरूपपरमधर्म एवोक्त इति सर्वं समञ्जसम् ।

नामकीर्तनरूपो हि धर्मः श्रीपरमात्मनः ।
श्रुतिस्मृतिपुराणादिशास्त्रेषु विहितः क्रमात् ॥
सर्वाश्रमणामन्येषां जनानां च गरीयसाम् ।
निकृष्टानां च सर्वेषां सर्वाघौघनिवारकः ॥
सर्वेष्टफलदो ब्रह्मविज्ञानस्य समुद्भवः ।
वेदोक्तः सर्वधर्माणां सकलाश्रमवासिषु ॥
अनुत्तमः श्रुतः कंचिन्नियमं नैव वाञ्छति ।
अतः सकलधर्मेभ्यः सुलभः सर्वमङ्गलः ॥
इत्येतदर्थं सकलं स्पष्टीचक्रे स्ववाक्यतः ।
सहस्रनामभाष्येऽस्मिन्भाष्यकारो दयाम्बुधिः ॥